॥ श्रीः ॥



# न्यायसिद्धान्तमुक्तावली

( प्रत्यक्षखण्डम् )

विविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजमिथिलेशश्री ५ मल्लक्ष्मीश्वरसिंहवहादुर-जी-सी-आई-ई महोदयानां ज्येष्ठधर्म्मपत्न्याः श्री५मल्लक्ष्मीवतीत्यन्वर्थाख्याविभूषिताया धर्म्माधिकारिपदवीमनुसन्दधता

मैथिलझोपाख्य पण्डितश्रीमुकुन्दशर्म्मणा सङ्कलितया अभिनवप्रभाख्यया व्याख्यया संवलिता

तेनैवोक्तपण्डितवरेण सुपरिष्कृता प्रकाशिताच सैषा—

बाबूश्रीजयकृष्णदास-हरिदास-गुप्त-महोदयानां काशीस्थ चौखम्वा-विद्याविलासमुद्रणालये मुद्रिता

*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
*Benares.*

1914.

शकाब्दाः १८३५ सन १९१४ ई० मूल्यम् १)

प्रथमावृत्तिः १००० ) राजकीयनियमेन स्वायत्तीकृतास्ति प्रकाशयित्रेतिविदाङ्कुर्वन्तु

# भूमिका ।

मूलादर्थेऽर्थतोमूले वाचयित्रा विचारिते ।
मुद्राप्रमादजाहानिरचिरादपयास्यति ॥ १ ॥
शुद्धिपत्रमनीषाभ्यां संशोध्य सुमनीषिणः ।
पाठयन्तु पठन्त्वद्धा ज्ञास्यन्ति निखिलं स्फुटम् ॥ २ ॥

विदितमेवैतत्तर्ककर्कशविचारचातुरीचणानामपश्चिमधियां विपश्चितां भारतीयानां यदेषा न्यायसिद्धान्तमुक्तावली समाख्या न्याय—वैशेषिक—भाषापरिच्छेद-(कारिकावली-) व्याख्यामहामहोपाध्यायश्रीमद्विश्वनाथन्यायपञ्चाननभट्टाचार्यमहाशयैर्न्यायव्युत्पित्सुजनोपचिकीर्षया निर्म्मितेति । सेयंसाम्प्रतं प्राच्योदीच्यावच्छेदेन समस्तेऽत्र भारते वर्षेऽध्ययनाध्यापनपथपथिकैस्तर्करसिकैर्निजोपकण्ठं सादरं सन्धार्यमाणापि अतिसंक्षिप्तचिरन्तनोक्तिभिर्ग्रथ्यमानतया मन्दमतीनां सुखबोधाय न प्राभूदिति तेषान्दयमानैर्म्मान्यपण्डितवरैर्म्महादेवभट्टमहाशयैः प्रकाशाख्यया व्याख्यया समलमकारि तस्या अप्यतिगहनतयाऽतिविपुलतया च नाधुनातनानां सुकुमारमतीनां व्युत्पित्सूनान्तयापि सुखबोधोऽभावीति रामरुद्रशर्म्ममहानुभावैस्तरङ्गिण्याख्या प्रकाशव्याख्याऽकारि । सा तु विपुलघनव्याख्यानरसपूरिता समभिवृध्यमाना समाप्लावयामसा समन्ततोव्युत्पित्सुजनमनःकेदारानिति न नवाङ्कुरितव्युत्पत्तिबीजानान्तया लाभस्समभवदितिनितान्तव्याकुलतामासेदिवद्भिर्निजान्ते-

वसद्भिर्भृशमभ्यर्थितेन मया तमुक्तप्रकारकम्प्रकाशग्रन्थमेवावलम्ब्य निजगुरुचरणानां साम्प्रतमध्यविमुक्तक्षेत्रम्प्राप्तमुक्तिसाम्राज्यानान्तत्रभवतान्दर्शनपारदृश्वनां साहित्यविद्यामूर्त्तीनाम्महामहोपाध्याय (सी. आई. ई.) पदविभूषितानाम्मानवल्ल्युपाख्य श्री¹मद्गङ्गाधरशास्त्रिमहाशयानामनुशिक्षितवर्त्मनाऽभिनवप्रभाख्येयं व्याख्या सम्पादिता । अस्याश्च साम्प्रतं प्रचुरप्रचारतामुपगता काशीस्थपण्डितवराणां विशेषतोऽव्याकृत्यादिविदाम्पाठनशैली सर्वतः सर्वथानुसृतेति भवेदियं नव्यव्युत्पित्सुजनोपयोगायेति वाढं प्रत्येमि ।

परमनया सम्भाव्यमान उपयोगस्तदैव सर्वेषां सुखमभविष्यद्यदेयं सम्मुद्र्य प्राकाशयिष्यतेति कृतसंविँदा मया दरभङ्गामलङ्कुर्वच्चरणकमला स्वर्वासिबाबूश्रीमज्जनेश्वरसिंहमहनीयचरितानान्धर्म्मपत्नी श्रीमज्जनेश्वरीदेवी समभ्यर्थिताऽर्थसाहाय्यमुपगन्तुम् ।

तदनुकम्पयैवेयं काशीस्थचौखम्बासंस्कृतमुद्रणागाराधिपति बाबूश्रीजयकृष्णदास–हरिदास–गुप्तमहोदयस्य हस्ते मुद्रापयितुमर्पिता । तत्र च कार्यबाहुल्यवशादियता कालेनेयङ्कथमपि पूर्णतामापादितेति तस्योपकृतिम्मुहुः स्मरामि ।

भृशं समनुकम्पितश्चास्मि निजप्रियसुहृद्भिः काशीस्थराजकीयसंस्कृतपाठशालायां व्याकरणादिनिखिलदर्शनशास्त्राध्यापकैर्व्याकरणाचार्य–सद्धर्म्माधिकारि––श्री३मन्नागेश्वरपन्तमहाशयैर्येनात्मनोऽमूल्यसमयदानेन बहुशः स्थलविशेषेषु निजकृपादृष्ट्येयं समालोकिता संशोधिताचेति ।

परमियमनेकेषां विदुषां हस्ते संशोधनाय समर्पितेति कृ-

---

१ एतस्याविशेषपरिचयः खण्डबलाकुलप्रशस्तितोऽत्रैवावधेयः ।

चित्कचित्त्रुटिरशुद्धिश्चात्रोर्वरितेति समालोच्यान्ते शुद्धिपत्रसान्निवेशनेन सनाथीकृतेयम् ।

तावतापि सीसकाक्षरयोजकदोषेण मदीयदृष्टिदोषेण चोपनता असन्निवेशिताश्च शुद्धिपत्रेष्वशुद्धयः क्वचित्कदाचित्सम्भाव्यन्त एवेति तदर्थं साञ्जलिबन्धं विपश्चितोऽनुनयामि । यद्येनाममत्सराः सहृदयवरा निजकृपादृष्ट्या कृतार्थयेयुः संशोध्य च मामपि प्रबोधयेयु स्तदात्वात्मानं सफलोद्योगंमन्ये प्रयतिष्ये चास्याः पुनर्मुद्रणसमये यथादर्शिताशुद्ध्यपाकरणाय ।

सर्वान्तेऽन्तेवसतोजनानभ्यर्थयामि यदनयात्मन उपयोगमासेदिवद्भिर्भवद्भिरर्थसाहाय्यमुगतोऽहमस्या उत्तरभागमपि यथावसरम्मुद्राप्य प्रदर्शयिष्यामीति तथा भवद्भिरपि झटिति प्रयतनीयमिति ।

निगदति विदुषामाश्रवः
दरभङ्गामण्डलान्तर्गत–हाटीतप्पान्तर्गत–
हरिपुरग्रामनिवासी करमहावंशाङ्कुरः
गोपाख्यनन्दलालशर्म्मतनुजन्मा
वख्शी पं० श्रीमुकुन्दशर्म्मा

॥ श्री दुर्गाशरणम् ॥

# ॥ अभिनन्दनम् ॥

मैथिलनृपकुलजनकः खण्डबलोपाख्यविप्रकुलतिलकः
राजाभूत्प्रथमः खलु महेशठक्कुर इति प्रथितः ॥ १ ॥

चिन्तामणिप्रभृतिनैकनिबन्धकर्त्तृ—गङ्गेशनामकबुधप्रवरप्रशिष्यः ।
योऽत्रापपण्डितदुरापमहामहोपाध्यायप्रशस्तिमतुलप्रतिभाभरेण २॥
व्यरचि रचितविद्वच्चित्ततोषेण येन ।
प्रकटगुणविशाला धर्म्मसद्ग्रन्थमाला ॥
निजगुणगणतुष्टादक्बराख्यः क्षितीन्द्रा—
दलभत मिथिलायाः प्राज्यराज्यं महौजाः ॥ ३ ॥
शेषं व्याकरणे कणादमपि यस्तर्के मुनिं जैमिनिम् ।
मीमांसानिचयेऽत्यशेत मतिमन्नीराजिताङ्घ्रिद्वयः ॥
गुर्वीं राज्यधुरां निधाय तनये वाराणसीमाश्रयन् ।
देवं मन्मथवैरिणं परिचरँस्तद्रूपतामभ्यगात् ॥ ४ ॥
तद्वंशेऽभूत्प्रतापोत्करकरनिकरव्याप्तदिक्चक्रवालः ।
प्रासत्रासातिरेकात् पदयुगनिपतद्वैरिभूपालभालः ॥

---

१ "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते । विप्रस्तु वेदपठनाद्ब्रह्मज्ञानाच्च ब्राह्मणः ॥ इति स्मृतिरत्रानुसन्धेया ॥ तेनवेदाध्ययनकर्त्तृत्वलक्षणं श्रोत्रियत्वमस्यावेदितं भवति ।

दाक्षिण्याक्षिप्तवाचस्पतिमतिविभवः प्रोल्लसत्पुण्यजालः ।
पाखण्डिव्रातकालःशुभगुणगणयुङ् माधवक्षोणिपालः॥५॥

रामः क्षत्रकृतान्तघोरपरशुव्यापारसम्पादिता–
मेकस्मै किल कश्यपाय जगतीं प्रादादघोन्मुक्तये ।
निष्कामः प्रदद् द्विजेन्द्रततये न्यायार्जितां तां पुनः ।
पुण्यैर्निर्जितवान्न भार्गवममुं देवः कथं माधवः ? ॥ ६ ॥

न भूतदयया समं सुकृतमस्ति भूमीतले ।
प्रमाणमिह भूभुजो जनकरन्तिदेवादयः ॥
इति स्वहृदि भावयन् खलु दधार सर्वात्मना ।
दयाव्रतमखण्डितं धरणिमण्डलाखण्डलः ॥ ७ ॥

स देहेषु हेयत्वमुत्प्रेक्ष्य धीमान्,विदेहेषु काश्याश्च गेहानि शम्भोः ॥
विनिर्म्माय निर्माय उर्वीं विहाय,प्रविश्याशुकाशीमभूत्तत्प्रवासी॥८॥

तस्यासन्नयसम्पन्ना विनयाऽवनता गुरौ ॥
राज्ञः पंक्तिरथस्येव तनया वेदसंम्मिताः ॥ ९ ॥

( ज्येष्ठः श्रीकृष्णसिंहो निरवधिजनतानन्ददोऽवंशकर्त्ता ।
येनैतत्प्राज्यराज्यं परकरकमलादाहृतं स्वेद्धबुद्ध्या ॥
तं प्रागेवान*पत्योबलभिदवनिपस्यास्य मित्रं प्रशान्तं ।
कौशल्यान*न्ददं द्राक्परदलदलनायात्मसात्संचकार)

---

१. वेदे सम्यक्मिताः परिचिताः । चतुः संख्याकाश्च ॥

* एक पुत्रोऽनपत्य इति न्यायात् । *कौशल्येन सम्राट्सम-क्षम् "ब्रजेल्हाटी" तिपदप्रयोगमात्रेण सम्पूर्णराज्यमण्डलरक्षण-रूपेण आनन्ददम् । एतच्च वृत्तं खण्डबलाकुलप्रशस्तिविदामपरो-क्षम् । तथाच यथा पंक्ति(१०)रथस्य ज्येष्ठशन्ततिस्तत्प्रियसुहृदालो-मपाद–दशरथेनानपत्येनादावेवात्मसात्कृता पश्चाद्रामादयोराज्यर-क्षणक्षमाअभूवन्वेदमितास्तथास्यापीति व्यक्ता पूर्णोपमा ॥

ज्येष्ठस्तत्रारिपक्षक्षयकृदुदभवच्छत्रसिंहो नृसिंहः ।
प्रेष्ठस्तं चानुजातोऽतुलबलमतिमान्कीर्त्तिमान् कीर्त्तिसिंहः ॥
गोविन्द स्तत्कनीयानरिकुलदहनस्तत्कनीया–न्रमेशो ।
वैमात्रेयोऽस्यं भव्याकृतिरतुलयशा श्छत्रसिंहोऽपि तद्वत् ॥१०॥
तातै निर्विघ्न याते स्मररिपुनगरीं स क्षितेर्वैरिजेता
नेताऽभूच्छत्रसिंहः पुरुमतिविभवध्वस्तगीर्वाणगर्वः ॥
भ्राजत्सन्ध्यादियोगान्प्रकृतिहिततमान्यस्य शास्तिप्रयोगान् ।
वीक्ष्योत्तारैःसभार्दैशशतनयनैर्विस्मितोऽभूद्विडौजाः ॥११॥
छत्राऽऽख्यादुद्रसिंहः समजनिनृपते र्वासुदेवस्तथान्यः
ताते स्वर्गं प्रयाते धरणिपतिरभूद्रुद्रसिंहो नृसिंहः ॥
किंब्रूमोऽस्य प्रभावं हरिपदयुगलद्वन्द्वसत्प्रेमभावात् ।
कामादीनामभावाद्गिरिश इव कलौ वैष्णवाग्रेसरोऽभूत् ॥१२॥
महेश्वर-गुणेश्वरौ तदनु नेत्र-गोपी-श्वरौ ।
सुताः श्रुतिमिता जनिं जगति लेभिरे रुद्रतः ॥
महेश्वरमहीपते- रतुलशेमुषीवैभवै-
रहन्यहनि मैथिलक्षितिरदभ्रदैर्घ्येन्दधौ ॥ १३ ॥
मनसि सुकृतं यस्य क्रोधे यमो वदने शशी
महसि सविता बुद्धौ वाचस्पतिः कमला दृशि ॥
धनपतिरथप्रीतौ सूक्तौ हरिर्भ्रुकुटौ हर-

---

१ महाराजकुमार बाबू–रमापतिसिंहः ।

२ गोविन्दसिंहस्य कीर्तिसिंहस्य च ।

३ अस्यवैमात्रेयः । तथाच माधवसिंहमहाराजस्य तिसृषुभार्या-स्वाद्यायां छत्रसिंहः द्वितीयायां कीर्त्तिसिंह—गोविन्दसिंहौ । तृतीयायां रमापतिसिंह इतिचत्वारस्तनया अभूवन् । तेच रामाद-यइवेति व्यक्तमुपरिष्टात् ॥

श्चिरमनुवसेत् क्षोणीनाथः कथं स भवेन्नरः ॥ १४ ॥

तस्यानुजः सुजनताजनिताधिकश्री-
र्नाम्ना गुणेश्वर इति प्रथितः पृथिव्याम् ॥
दत्तादरः स्वगुरुवाचि जहार विद्वान्
वाचा सुधामधुरया हृदयञ्जनानाम् ॥ १५ ॥

धर्मेण पापमखिलं विलयं प्रयाति
धर्म्मिष्ठमार्यपुरुषं पुरुषाः श्रयन्ते ॥
धर्म्मोऽवितोऽवति विनाशयति प्रनष्ट-
स्तस्मात्स धर्म्मधनरक्षणसक्षणोऽभूत् ॥ १६ ॥

नेत्रेश्वरस्तदनुजोमनुजोपितेजः प्रागल्भ्यविक्रमभरैःसुरतांप्रपेदे।
चापप्रतापभरभीष्मभुजोऽपिचारु–भावेनपूर्णशशभृत्सुषमांजगाहे१७

सङ्गीतं प्रथमं पुराणकविना स्फीतं किमप्युज्ज्वलम् ।
रामे राजनि राजनीतिनिपुणे यल्लोकरक्षाव्रतम् ॥
आसीत्तन्नयनेश्वराभिधमहोदारे समस्तं तत-
स्तं रामप्रतिमं महोदयमहो कस्मान्न मन्यामहे ? ॥ १८ ॥

स लक्ष्मणो वा नयनेश्वरो वा द्वावेव लोके किल पुण्यभाजौ॥
यद्भ्रातृवश्यत्वमुपेत्य वीरौ बभूवतुस्तौ मरुता×मपीष्टौ ॥१९॥

## महेश्वर महीभर्त्तु–र्लक्ष्मीश्वर–रमेश्वरौ ॥

अभूतां तनयौ वीरौ यत्कीर्त्या सर्वमावृतम् ॥ २० ॥
सुर-हरि–ललित–भवेश्वर[1] संज्ञाभिः सद्गुणेश्वरमहीन्द्रात्[2] ॥
चत्वारः खलु तनया नयादिसम्पद्युता आसन् ॥ २१ ॥

---

१ द्वन्द्वान्ते श्रूयमाणस्येश्वरपदस्य प्रत्येकं सुरादिष्वभिसम्बन्धः ॥
२ इन्द्रपदमिह जहदजहल्लक्षणयासुरसामान्यमाचष्टे ॥×देवानाम ।

जातौ नेत्रेश्वराच्चापि नृपादेकरदेश्वरः ॥
जनेश्वरश्चापि सुतौ ज्येष्ठः सम्प्रति राजते ॥ २२ ॥

निशान्तं शान्तीनां प्रसवसदनं तीव्रतपसाम् ।
निधिः सौजन्यानामविकलकलानां कुलगृहम् ॥
निधानं कीर्त्तीनां शरणमभयं दुःखितनृणाम् ।
जनेशोनाम्नाभूद्गुरुचरणनिष्ठोनरपतिः ॥ २३ ॥

यं दृष्ट्वापि रजस्तमःप्रकृतयः स्वाभाविकीं दुस्त्यजाम्
हित्वा स्वां प्रकृतिं प्रकाममभवन् दान्ताः प्रशान्ताशयाः ॥
भावान् भूमिगतान् हठाद्विदधती स्वच्छानतुच्छानहो
राकाचन्दिरचन्द्रिकासहचरी यत्कीर्त्तिरुज्जृम्भते ॥ २४ ॥

असितगरुतिति[2] राधे राधिकेशे[3]प्रियाहे ।
अनलरसनवेन्दु ( १९६३ )प्रोन्मिते वैक्रमाब्दे ॥
सुकृतशतकपूतः पूतनारे ! मुरारे !
व्रजनृपतिकुमारेत्यालपँस्तन्मयोऽभूत् ॥ २५ ॥

सीतेवाऽतिदृढा सतीव सरला गार्गीव विद्यावती ।
सावित्रीव नितान्तकान्तहितकृद्रुक्मीव धैर्यव्रता ॥
शर्म्मिष्ठेव पतिप्रिया व्रजपतेः पत्नीव दाक्षिण्यभू-
स्तैस्तैः श्लाघ्यगुणैर्जनेशमहिला लोकोत्तरैः पूज्यते ॥ २६ ॥

सत्याः पत्या सहैव ज्वलननिपतनं ब्रह्मचर्ये स्थितिर्वा ।
काङ्क्षन्त्या भर्त्तृलोकं द्वयमिह गदितं पूज्यपादैर्मुनीन्द्रैः ॥

---

१ नृपशब्दोऽत्र प्रजापालनवचनः । एवमग्रेनरपति शब्दोऽपि ॥

२ कृष्णपक्षे ।

३ एकादशी बुधवासरे

तस्मात्पत्यौ प्रयाते मधुरिपुमयतांतत्प्रियं कर्त्तुकामा ।
वामाङ्गत्वाद्विधत्ते प्रतिदिनममलब्रह्मचर्य्यव्रतानि ॥ २७ ॥

तस्याः संरक्षणेदक्षा दाक्षीव पतिदेवता ॥
लक्ष्मीश्वरमहीपालपत्नी संप्रति राजते ॥ २८ ॥

से तीव्रतैकाऽयनतत्त्वपोषकैः ।
सतीव्रतैः कायनतत्त्वपोषकैः ॥
विभाति विभ्राट् क्षितिभृत्परिग्रहो
विभाऽतिविभ्राट्क्षितिभृत्परिग्रहः ॥ २९ ॥

पूजाभङ्गरुषा मघोनि परुषा धारास्त्यजत्यम्बराद् ।
योहरतेन जुगोप गोपवसतीरुद्धृत्य गोवर्द्धनम् ॥

---

१ सः विभ्राट् क्षितिभृत्परिग्रहः तेजोविभ्राजमानराजपत्नी सतीव्रतैः पतिव्रताधर्मैः विभाति । कीदृशः क्षितिभृत्परिग्रहः- विभाऽति विभ्राट्क्षितिभृत्परिग्रहः ॥ विशिष्टकान्त्याअतिभ्राजिष्णुपर्वतकान्ते ग्रहः स्वीकारोयस्मिन्सः परिशब्दोऽत्र सदृशसमानार्थोऽपिकान्तिवचनः। यद्वापरिग्रहशब्दएव तथाविधः (कान्तिवचनः) इति ध्येयम् । कीदृशैः सतीव्रतैः तीव्रतैकायनतत्त्वपोषकैः । तीव्रताया यदेकं मुख्यमयनं वर्त्म (मार्गः) तस्य यत्तत्त्वं याथार्थ्यं तत्पोषकैः। विसर्गव्यवधानं न यमकविघातकम् । अतिसौन्दर्यसौकुमार्यादिगुणगणशालिन्यपि महाराजपत्नी पत्यौ मृतेऽतितीव्रैः कृच्छ्रादिव्रतैश्शरीरन्तनूकरोतीतिस्पष्टोऽर्थः ॥ "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" इत्यजयः। अत्रचकारात्कान्तावपि ॥ यद्वा तथाविधकान्त्यात्युज्ज्वलपर्वत-(हिमालय-) वत्परिग्रहो देहोयस्यसः । स्वर्णकान्तेस्तपःसहत्वे पाण्डु-(शुक्लरूप-)तायाः स्वभावसिद्धत्वात् ॥ कोशे 'कलत्रेऽङ्के" इति प्रामाणिकः पाठः ॥

तं गोपालमनाथनाथमतुलप्रेम्णा पतिं धिन्वती ।
तत्सेवाविवशा जनेश्वरवधूर्मीरेव[1] विद्योतते ॥ ३० ॥

निवासैर्धेनूनां त्रिदशभवनैः पाठनिलयै–
रनाथत्राणार्थप्रविततमठैरौषधगृहैः ॥
प्रपाभिः[2] कासारैः[3] सततमुदपानैस्तरुकुलैः[4] ।
जनेश्वर्या देव्याःखलु जगति जागर्त्ति सुकृतम् ॥ ३१ ॥

महोदयाऽसौ विलसन्महोदया[5] ।
चिरन्धरित्रीवलये विराचताम् ॥
यया दयादानसुरद्विजार्चनैः ।
सनातनोधर्म्मपथोऽद्य रक्ष्यते ॥ ३२ ॥

देवीपुराख्ये निजभर्त्तृनिर्म्मिते ।
स्थाने वसन्ती कमलातटे शुभे ॥
अर्थिव्रजान्संस्तुतदानवारिणा ।
सन्तर्पयन्ती श्वसिताच्छतं समाः ॥ ३३ ॥

---

१ मीरानाम्नी भारतभूप्रसिद्धा उदयपुरराजमहिषी गोपालभग-
वद्भक्तेति सुव्यक्तं भारतीयानाम् ॥

२ प्रपा–पानीयशालिका ।

३ कासारस्तडागः ।

४ उदपानं कूपम् ।

५ विलसन्त्यौ शोभमाने महस्तेजो दयाचेत्येतेयस्याः सा, म-
हस्तूत्सवतेजसोरित्यमरः ।

## * अथ समर्पणम् *

श्री ५ लश्री मिथिलेशसत्कृत *वलोदर्कप्रतिष्ठान्वित—
श्रीमद्गोकुलनाथशर्म्मतनुजः श्रीमान्सनाथोऽभवत् ॥
योविद्वानखिलं विनश्वरमिदं श्री १०८ मत्परेब्रह्मणि ।
विन्यस्याखिलभावमाशु विजहावर्थे ममत्वं दृढ़म् ॥१ ॥
पुत्रा वेदमिताः परैरनमिताः सन्नीतिनिष्ठा विदः ।
तस्यासन्मिथिलेशलब्धविभवादानप्रतिष्ठान्विताः ॥
तेषाञ्च[1] ह्यनुजो[2]ऽनुजाश्रितपदः श्रीमाञ्छिवाराधको ।
"भोलानाथ" इतीदृशीमलभताभिख्यां दयाख्यातिमान्॥२॥
तत्सूनुर्मिथिलामहीन्द्रतनुज श्रीमद्गुणेशाभिध—
प्रोद्यत्सद्यशसाश्रितः करमहावंशाम्बुधीन्दुर्महान् ॥
प्रह्लादं जनयन्प्रभोर्निजकृतौ दाक्ष्यञ्च सन्दर्शयन् ।
श्री १०८ मत्कृष्णपदाब्जसेवनरतः श्रीनन्दलालोऽभवत्॥३॥
तत्सूनुर्निजतातपादयुगलानुध्यानविध्मातधीः ।
व्याकृत्यादिविदग्रणीः समभवच्छ्रीमान्मुकुन्दः सुधीः ॥
सम्राड़र्पितसत्प्रशस्तिक इमां मुक्तावलीसङ्गताम् ।
टीकान्तत्करकञ्ज[3]योरभिनवां भक्त्याऽर्पिपत्सत्प्रभाम् ॥४॥
सेयं तत्करकञ्जयोरधिगता कालेन चाल्पीयसा ॥
तस्याः सत्कृपया जनोपकृतये मुद्रापणे प्रस्तुता ॥
वस्ट्टत्वङ्कमही (१९६८) मिते मधुसिते श्रीवैक्रमे वत्सरे ।
प्रारब्धेऽधिहरि[4] प्रमोदमतुलं पुण्यञ्च तस्या व्यधात् ॥५॥

---

* वखशीपदान्वितः ।
१ मध्ये । निर्द्धारणेषष्ठी । २ द्वयोरनुजः ।
३ तस्याउक्तश्रीमज्जनेश्वरीदेव्याःकरकञ्जयोर्हस्तकमलयोरित्यर्थः ।
४ चन्द्रवासरे ।

# अथशुद्धिपत्रम्।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३ | २२ | न्यारः | चारः |
| १३ | २५ | त्यवे | त्येवे |
| १५ | १५ | त्तिर्न्न | त्तिर्न्न |
| १५ | १८ | पथ्यतिथी | धर्मपथ्यर्थे |
| १५ | २१ | र्येणं | र्येण |
| १६ | २१ | शास | शास |
| २१ | १९ | तद्वा | तद्बा |
| २३ | ५ | मवा | समवा |
| २४ | १० | ज्ञताया | ज्ञाया |
| २४ | १९ | नच्छा | नेच्छा |
| २७ | १ | लत | लस्त |
| ३० | ४ | शेषः | शाषाः |
| ३१ | ७ | नुमा | अनुमा |
| ३४ | ५ | सादश्यं | सादृशं |
| ३७ | २५ | न्योभा | न्योन्याभा |
| ३९ | १४ | व्याणा | व्याणी |
| ३९ | १७ | दाम्ये | दात्म्ये |
| ३९ | २५ | द्धत्व | द्धत्त्व |
| ४० | २६ | ३कार्य | १कार्य |
| ४१ | ९ | १कार | कार |
| ४२ | २५ | योः विं | योर्विं |
| ४४ | १ | वत्वा | वत्त्वा |
| ४७ | ९ | नि र्य | तिर्य |
| ४८ | ३ | च्यते | च्यते |
| ४८ | ४ | साना | सामा |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५० | २० | सौऽ | साव |
| ५३ | १ | ॥" | ॥"इति ॥ |
| ५३ | १० | यद्वै | यद्बै |
| ५३ | ११ | सथा | तथा |
| ५४ | २ | रत्वम् | रत्वम् ॥८॥ |
| ५४ | ३ | रत्वम् ॥ ८ ॥ | रत्वम् ॥ |
| ५४ | १३ | सिद्ध- | सिद्धौ[2] |
| ५४ | १५ | स्याप | स्याः प |
| ५८ | ५ | वस्य | वस्यापि |
| ५९ | ९ | तन्नित्यै | तन्नित्य |
| ५९ | २५ | ४घट | १घट |
| | | | (६०पृ.८पं.स्थेयम्) |
| ६० | ४ | ष्टय | ष्ट्य |
| ६० | ८ | प्रमात्व | प्रमात्वे[1] |
| ६० | १० | न | नै[2] |
| ६० | १२ | अन्यथा | अन्यथा |
| ६० | १६ | आमश्यौ[2] | आमश्यौ[3] |
| ६० | २३ | १अत्यन्ता | २अत्यन्ता |
| ६० | २५ | २आमो | ३आमो |
| ६१ | ८ | एवं | इत्थ |
| ६२ | १ | त्वम्। | त्वम्। सं-सर्गेति। |
| ६३ | ९ | अभेदस्ता-दात्म्यम् | तादात्म्य-भेदः |
| ६३ | २५ | ज्ञत्या | ज्ञप्त्या |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | १६ | रत्य | रधिकरणे-ऽत्य |
| ६४ | २१ | नन्विति | नन्वस्त्विति |
| ६५ | ११ | त्वे। | त्वे। अप्र-त्यक्षत्वंस्या-दिति। |
| ६५ | ११ | दिति | दित्यर्थः |
| ६५ | १८ | १२॥ | १२॥ ½॥ |
| ६६ | ५ | इर्वरा | इवरा |
| ६७ | २० | मव | मेव |
| ७० | ६ | दायो | दयो |
| ७३ | १८ | हत्व | हत्त्व |
| ७४ | १५ | थाँसि | थासि |
| ७४ | २२ | शुन्य | शून्य |
| ७४ | २६ | ३ तिस्रो | १ तिस्रो |
| ७५ | १० | यदवच्छि- | यद²वच्छि- |
| ७५ | १८ | १ घटत्वा | २ घटत्वा |
| ७६ | १५ | कर्म | कार्य |
| ७७ | ४ | स्पर्श | स्यन्द |
| ७७ | २६ | च्छिन्न- | च्छिन्न० |
| ७७ | २८ | त्यपि | त्येवं |
| ७८ | १६ | लादेः | लरूपादेः |
| ७८ | १९ | तिस्त | त्तिस्त |
| ८० | १३ | पूवभा | पूर्वभा |
| ८० | १४ | कङ्क्षा | काङ्क्षा |
| ८० | १७ | कत्व | कत्वे |
| ८० | २० | धया | या |
| ८१ | १८ | ज्ञानि | ज्ञनि |
| ८१ | २२ | शाव | शवि |
| ८२ | २१ | भ्रमि | भ्रमि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८६ | १० | हत्वे | हत्त्वे |
| ८७ | १ | भव | भवे |
| ८७ | ७ | द्वेषु मध्ये | द्वेषु |
| ८८ | १४ | वृत्य | वृत्त्य |
| ८९ | ८ | नन्वत्र | नन्वन्यत्र |
| ९० | ४ | नावा | नवा |
| ९२ | ९ | च्चय | च्चेय |
| ९२ | १३ | त्तैति। | त्तैति। मूले परमंमहदिति। भाव परममहत्त्व प्रधानोनिर्देशः।तदाह॥ श्चेति॥ |
| ९५ | १५ | वत्व | वत्त्व |
| ९७ | ११ | नाङ्गुणाः | नांविशेष-गुणाः |
| ९८ | ४ | तयि | तीय |
| ९८ | १४ | तद्वृत्ति | तदवृत्ति |
| १०२ | ७ | शाँद्य | शाद्य |
| १०२ | १३ | वन्ह्यादौ | वह्न्यादौ |
| १०३ | ११ | णास्यु | णाःस्यु |
| १०३ | १६ | त्याह | त्याहुः |
| १०४ | १४ | दापो | दोपा |
| १०४ | २६ | तमा | तदा |
| ११० | १२ | द्घटादेः | दुघटादेः |
| ११३ | ७ | श्रामो | श्रमो |
| ११३ | ७ | विश्रा | विश्र |
| ११३ | ८ | तका | तभावका |
| ११३ | १० | हत्वं | हत्त्वं |
| ११३ | २२ | श्रामा | श्रमा |
| ११९ | ४ | दनुमा | दुन्नय |
| ११९ | १३ | त्याध्या- | त्यध्यात्मंत-त्रभवआध्या- |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२१ | ५ | षु मध्ये ग | षुग |
| १२८ | ३ | लप्र | लत्वप्र |
| १२८ | २० | म्भा "दि | म्भादि" |
| १२९ | १२ | द्धतु | द्धेतु |
| १३० | १५ | र्त्कीत्ति | त्कीर्त्ति |
| १३० | १६ | त्वता | त्वत्वा |
| १३१ | ४ | जलस्य | जलस्यैव |
| १३१ | ५ | वक्ष्यति | वक्ष्यते |
| १३१ | १२ | देहम | अयोनिज-मिति । अ |
| १३७ | १ | नचा | नचेदम |
| १३७ | २ | त्वस्या | त्वस्यचा |
| १३७ | ४ | र्थिवस्या | र्थिवभागस्या |
| १३८ | २ | रूप | रूपा |
| १३८ | ७ | त्वात् | पार्थिवत्वात् |
| १३९ | ५ | तेन | एतेन |
| १३९ | २३ | इदमु- | ० एतदादि-पुनरुक्तम् |
| १४० | १३ | यो रूप | रूप |
| १४० | २५ | रप्रा- | रप्र |
| १४२ | १३ | तेषुमध्ये | तेषां मध्ये |
| १४३ | २१ | नाक्तम् | नोक्तम् |
| १४३ | २५ | तते | ततो |
| १४५ | ५ | भेदा | वशा |
| १४७ | १४ | णगुणं | णगुण |
| १४९ | १७ | तत्रेसिः चैताति | तत्रेति |
| १४९ | १९ | रूपस्ये | रूपेस्ये |
| १४९ | २१ | हारस्ते | हारस्त |
| १४९ | २२ | वच्छि | वच्छि |
| १४९ | २६ | कर्णमिति | कर्णइति |
| १५० | ११ | कालेः | कालैः |
| १५१ | १ | भॅव | भव |
| १५१ | १९ | पना । प | प |
| १५१ | २४ | द्वि । वध | द्विविध |
| १५४ | ३ | सेनो | सैनवो |
| १५६ | ७ | ग्यादि | ग्यदि |
| १५६ | २५ | अत्रवा | अत्राग्नेयी नैर्ऋतीवा |
| १५८ | १ | आत्मेन्द्रिये | आत्मे |
| १५८ | ३ | धर | ऊर्ध्वाधर |
| १५९ | ५ | त्याहुः | तिवदन्ति |
| १५९ | ७ | ऊर्ध्वाभावः | भावः |
| १६० | २२ | भवे | भावे |
| १६५ | ६ | पत्तिः | पत्तेः |
| १६५ | ७ | रहः | रहात् |
| १६७ | २५ | एतदुत्तरपृष्ठस्थंवेदितव्यम् | |
| १६८ | ७ | गौर | गौरं |
| १७४ | २१ | तत्वं | तत्त्वं |
| १७५ | १८ | त्वभावः | त्वाभावः |
| १७६ | २१ | तद्ध्वं | तदूर्ध्वं |
| १७७ | १० | तात्विक | तात्त्विक |
| १७७ | १४ | त्वे । | त्वे |
| १७७ | १७ | तात्विक | तात्त्विक |
| १७७ | १८ | ऽतात्वि | ऽतात्त्वि |
| १७७ | २२ | व्यापत्तरः | व्यापारः |
| १७८ | ६ | अतात्विके | अतात्त्विके |
| १७९ | १८ | टिषवि | विषयि |
| १८० | १ | अना- | अनादे- |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८० | ६ | भापा | भावा |
| १८० | २१ | थर्केन | थंकेन |
| १८१ | ७ | प्रकटी | प्रकटी |
| १८२ | १ | न्तरेण | न्तरकृतकर्मणांदेहान्तरेण |
| १८२ | ६ | र्म्मणां | र्म्मणाम् |
| १८२ | ७ | न्तरे | न्तरेण |
| १८२ | ७ | देहे | देहेन |
| १८३ | ७ | प्रवृत्या | प्रवृत्त्या |
| १८३ | ८ | प्रवृत्या | प्रवृत्त्या |
| १८३ | ९ | प्रवृत्या | प्रवृत्त्या |
| १८४ | १७ | काल | "काल |
| १८४ | १८ | महत्व | महत्त्व |
| १८४ | १९ | पूर्वमुक्ता | पूर्वोक्ता |
| १८६ | १५ | तीत्य | ती" त्य |
| १८६ | १७ | मुनिरिति | मुनि"रिति |
| १८६ | २० | दित्य | दि"त्य |
| १८८ | ६ | तद्धि | तद्बुद्धि |
| १८९ | ११ | तत्रा | तत्र तत्रा |
| | | अयमुपरितनः पाठः | |
| १८९ | २३ | व्याप्य | व्याप्य |
| १९१ | २५ | २स्वस्य | १ स्वस्य |
| १९२ | ८ | सुरभित्वा-सुरभित्व | सुरभित्वादि |
| १९२ | २० | नांचे | नांच |
| १९३ | ९ | याग्यें | योग्य |
| १९३ | १७ | ग्सय | ग्यस |
| १९३ | १७ | गन्धा। | गन्धा- |
| ·४ | १८ | हिग | दिग |
| १९४ | २२ | रुपा | रूपा |
| १९५ | १० | द्भूत | दूभूत |
| १९५ | १० | धटा | घटा |
| १९५ | ५ | यप्र | यजन्यद्रव्यप्र |
| १९७ | २३ | स्दार्श | स्पार्श |
| १९८ | २ | हुः ॥५६॥ | हुः ॥ |
| १९८ | १९ | यारे | योरे |
| १९९ | १३ | काङ्क्ष | काङ्क्षा |
| १९९ | १८ | वेऽपि | वेऽपि |
| १९९ | २० | द्बोध | दूबोध |
| २०० | १४ | स्यार्श | स्पार्श |
| २०० | १८ | सुषप्ति | सुषुप्ति |
| २०० | २७ | काका | का |
| २०१ | ११ | अनुरो | अनुभवानुरो |
| २०१ | १३ | भावः। | भावः। इतीति। अस्य वदन्तीत्यनेनान्वयः। |
| २०२ | १ | । ५७ ॥ | ॥ ५६ ॥ ५७ ॥ |
| २०३ | ६ | तदूबि | ताद्धि |
| २०३ | १६ | भय | त्रय |
| २०७ | ४ | देर्वा | देश्चवा |
| २०७ | ६ | णत्वव्या | णत्वं व्या। |
| २०७ | ६ | त्वम्। | त्वम् ॥५८॥ |
| २०७ | ६ | स्धन्ध | स्कन्ध |
| २०८ | १६ | सन्व | सत्त्व |
| २११ | ९ | साग्नि | साग्नि |
| २१२ | ११ | नन्वा | नन्व |
| २१५ | २५ | भावन | भावेन |
| २१६ | १२ | स्कन्धा | स्कन्धा |

श्रीः ।

# कारिकावली ।

अभिनवप्रभोपेतन्यायसिद्धान्तमुक्तावलीसहिता ।

नमो गणाधिपतये सर्गस्थित्यन्तकारिणे ॥
अज्ञानतिमिराराातिबालशीतांशुधारिणे ॥ १ ॥
श्रीमदाद्यापदाम्भोजे नमन्मुक्तावलीं श्रिताम् ।
श्रीमन्महादेवभट्टतनूजदिनकृत्कृताम् ॥ २ ॥
प्रभामनुसरन्कुर्वे गुरुशिक्षितवर्त्मना ।
टीकामिमामभिनवामन्तेनिवसतां कृते ॥ ३ ॥
सन्त्येवात्र सुविद्भिरेव रचितास्टीका अनेका अपि ।
पूर्वैः किन्त्वियमाशुबोधजननी मूलाक्षरार्थाश्रिता ॥
व्युत्पित्सोर्मुदमावहेदिति कृताऽन्तेवासिनां याञ्चया ।
मात्सर्यम्प्रविहाय धीरधिषणा आलोकयन्तु स्फुटम् ॥ ४ ॥

अथ— तत्र भवान् विश्वनाथ–पञ्चानन–भट्टाचार्यो निजनिर्मितां कारिकावलीं ( भाषापरिच्छेदं ) व्याचिख्यासुर्निर्विघ्नपरिसमाप्तये कृतमीश्वरप्रार्थनारूप–( माशीर्वादात्मक–) म्मङ्गलं शिष्या अप्येवं कुर्युरित्यभिप्रायेण शिष्यशिक्षार्थं ग्रन्थघटकीकरोति * चूडेति *

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।

भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

लीलया विलासेन यत्ताण्डवं नृत्तं "ताण्डवं नटनं नाट्यं लास्यं नृत्तञ्च नर्त्तन" मित्यमरः। तत्र पण्डितो ऽभिज्ञः। एतेन नृत्तविशिष्टतया प्रसादोन्मुखस्य भगवतः स्मृतिविषयत्वात्प्रार्थितार्थसिद्धेरवश्यभाव्यत्वं सूचितम्।

इदञ्च हेतुगर्भं विशेषणं यतः लीलाताण्डवपण्डितः अत एव

१ गात्रविक्षेपमात्रं लोके समापरपर्यायं नृत्तम्। यथोक्तं महिम्नस्तुतौ "महीपादाघाताद् व्रजति सहसा संशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम्। मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिनतटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता" इति। क्वचित्कोशे नृत्यमित्यपि पाठो दृश्यते। तथैव च भट्टमहादेव आह। परस्पर्यायपठितानामपि नाट्यनृत्यनृत्तानां विशेषश्रवणम्। यथोक्तं दीक्षितचरणैर्भ्वाद्यन्तर्गणघटादौ 'वाक्यार्थाभिनयो नाट्यं यत्कारिषु नटव्यपदेशः। पदार्थाभिनयो नृत्यं यत्कारिषु नर्त्तकव्यपदेशः। गात्रविक्षेपमात्रं नृत्तमि'ति। अत एव नन्दिकेश्वरकृतकाशिकायां नृत्तावसान इत्येव प्रामाणिकः पाठस्तत्रैव ताण्डवव्यपदेशादित्यलम्।

२ हेतुः फलं प्रयोजनमिति यावत्। अस्यानुक्तौ हि विधोः किमिति चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्युत्थितप्रयोजनाकाङ्क्षाया उपशमो न स्यात्। यथा क्रियाकारकपदानां परस्पराकाङ्क्षा पितृपुत्रादिपदानां निरूपकाकाङ्क्षा नियता तथैव प्रवृत्तिमात्रं प्रतिप्रयोजनाकाङ्क्षापि नियतैव 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तत' इत्युद्घोषश्रवणात्। अत एवात्र समाप्तपुनरात्तत्वदोषशङ्कापि न। नियताXकाङ्क्षारहितान्वयबोधोत्तरं विशेषणान्त-

X स्वतादात्म्य—स्वविशिष्टविशेषणवचकपदघटितत्वोभयसम्बन्धेन वाक्यविशिष्टत्वं समाप्तपुनरात्तत्वं दोषः। वैशिष्ट्यञ्च स्वघटकविशेष्यवाचकपदावाधिकपूर्वत्वाभाववत्त्व—स्वघटकपदार्थज्ञानजनिताकाङ्क्षाशामकार्थबोधकत्वोभयसम्बन्धेन। चूडामणीत्यादेराद्यसम्बन्धेन वाक्यविशिष्टत्वाभावात् लीलेति विशे-

अचूडामणिश्चूडामणिवत्सम्पद्यमान इति चूडामणीकृतः। अभूततद्भावे च्विप्रत्ययः। चूडामणीकृतः चूडामणिवदाचरितो विधुश्चन्द्रो येन सः। अवलयं वलयं सम्पद्यते इति वलयीकृतः वलयीकृतः वलय-(कङ्कण-) वदाचरितः वासुकिःसर्पराजो येन सः। एतेनाभूषणरहितस्य कथं नृत्तमिति शङ्का निरस्ता। एतादृशो भवः शिवः "व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिरि"-त्यमरः। भव्याय कल्याणाय "कल्याणम्मङ्गलं शुभं भावुकं-

---

रान्वयार्थं विशेष्यवाचकपदस्य पुनरनुसन्धानमेव समाप्तपुनरात्तत्वम्। काव्यप्रदीपे महामहोपाध्यायगोविन्दठक्कुरा अपि स्वविशेषणानुपादानकालीनकैमर्थ्याकाङ्क्षानिवर्त्तकोपस्थित्यजनकपदघटितत्वं समाप्तपुनरात्तत्वमित्याहुः। यथा चोदाहृतश्चन्द्रालोके "समाप्तपुनरात्तं स्यादेष पीयूषभाजनम्। नेत्रानन्दी तुषारांशुरेत्यम्बुनिधिबान्धव" इति।

१ यद्यपि भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कारणत्वं भवपदप्रवृत्तिनिमित्तं, तथाच गुणक्रियाप्रवृत्तिनिमित्तकयोर्विशेष्यविशेषणभावस्य विवक्षाधीनतया लीलाताण्डवपण्डित इत्यस्यैव विशेष्यत्वाश्रयणे ऽपि नोक्तसमाप्तपुनरात्तत्वदोषप्रसरः, महादेवोऽपीत्थमेवाह, तथापि योगाद्रूढिर्बलीयसीति न्यायेन शीघ्रोपस्थितिकशिवशरीरवृत्तिभवत्वजातिविशेषरूपरूढ्यर्थमादायैवान्वयबोधोपगमात्। कल्पभेदेन शिवशरीरस्यापि भिन्नतया नृसिंहत्ववद्भवत्वस्यापि नानाव्यक्तिकत्वाज्जातित्वोपगमे न कापि क्षतिः। इत्थञ्च जाति-तद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकमिति नियमाद्भवस्यैव विशेष्यत्वमुचितमित्यभिप्रायवान्महादेवभट्टो ऽपि वस्तुतस्त्वित्यादिनोक्तयुक्तिमेवाऽऽस्थितवानित्यलमत्यक्षरक्षरणेन।

---

षणस्य द्वितीयसम्बन्धेन वाक्याविशिष्टत्वाभावाच्च न दोषः। तादात्म्यसम्बन्धदानादेव स्वघटकाद्यविशेषणवाचकपदस्य पूर्ववाक्यविशिष्टत्वेऽपि न क्षतिरिति हृदयम्।

भविकम्भव्य" मित्यमरः। भवतु। प्रार्थनायां लोट् ॥ १ ॥

शिष्याणां वक्तव्यार्थप्रतिपत्ताविष्टसाधनत्वग्रहजन्यशुश्रूषा-सम्पत्तेः प्रतिजानीते *निजेति* ।

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः।
विशदीकरवाणि कौतकान्ननु राजीवदयावशंवदः ॥२॥

अहं विश्वनाथपञ्चाननभट्टाचार्यः निजेन स्वेन निर्मिता र-चिता या कारिकावली ता-मति अत्यन्तं संक्षिप्तं संक्षेपः। नपुंसके भावे क्तः। यासु ता अतिसंक्षि-प्तास्तादृश्यश्च ताश्चिरन्तनानां कणभक्षाक्षचरणोदयनादीनां यां उक्तयो वचांसि वचःप्रतिपाद्याः साधकबाधकान्यतरप्रमाणोप-न्यासरूपा युक्तयस्ताभिः कौतुकान्ननु कुतूहलादेवं— विशदी-करवाणि प्रकटीकरोमि इति प्रतिज्ञा। अत्र हेतुगर्भविशेषणमाह। राजीवेति। राजीवे तन्नामके प्रिये पुत्रे शिष्येवा या दया कृपा तया वशंवदस्तदधीन इत्यर्थः ॥ २ ॥

ननु ग्रन्थादौ श्रोतृजनप्रवृत्तये विषयादिरूपमनुबन्धंचतु-

---

१ सङ्क्षेपो ऽत्र शब्दस्यैव न त्वर्थस्य। तथात्वे ग्रन्थस्याभिमत-सकलार्थप्रतिपादकतया बालव्युत्पत्तिजनकता न स्यात्।

२ एतेन स्वकपोलकल्पनामूलकत्वेनानादरणीयता निरासिता।

३ नन्वित्यवधारणे। "प्रश्नावधारणनुज्ञाऽनुनयामन्त्रणेननु" इत्यमरः॥

४ यतो राजीवदयावशंवदोऽतो निजनिर्मितकारिकावलीं विश-दीकरवाणि। अन्यथा स्वयं कृतस्य ग्रन्थस्य स्वयं व्याख्याकरणं न ग्रन्थकृच्छैलीपरिशीलितमिति तदाचरणं दयातिशयपारवश्यनिब-न्धनमेव न स्वतः। अतोऽत्रापि समाप्तपुनरात्तत्वं नाशङ्कनीयम्।

५ अथ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत' इति न्यायेन ग्रन्थ-रचनाप्रवृत्तौ कीर्त्तिः प्रयोजनं वाच्यम्। स हि लोकानां ग्रन्थाध्य-यनप्रवृत्त्यधीना, प्रवृत्तिमात्रं प्रति चेष्टसाधनत्वप्रकारकं कृतिसा-

ष्टयं वक्तव्यम् । यथोक्तं भट्टपादैः ।

"विना विषयसम्बन्धौ तथैवार्थाधिकारिणौ ।
अन्याख्येयो भवेद् ग्रन्थः स्याद् ग्रन्थे तच्चतुष्टयम्" ।

इति, तदं विना ग्रन्थे प्रवृत्तिरेव न स्यादिति तान्सूचयन्न-तिसंक्षिप्तत्वादेतद्ग्रन्थस्य सकलपदार्थप्रतिपादकतया कथम-स्माद् बालव्युत्पत्तिरित्याशङ्काश्चैतद्ग्रन्थस्य सकलपदार्थप्र-तिपादकत्वप्रदर्शनेन परिहरन् ।

'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ? तत्कुरुष्व मदर्पणमि'ति ॥

भगवदुक्ते-मुक्तावली-( हार-) समं स्वकीयग्रन्थं भग-वति चार्पयन् स्वकीर्त्यनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्ना-ति * सद्द्रव्येति * ।

---

ध्यत्वप्रकारकश्च ज्ञानं हेतुः, अत एव नको ऽपि जलताडने सुमेरु-शिखरानयने वा प्रवर्त्तते, निरुक्तज्ञानद्वयश्चेहानुबन्धज्ञानं विना-ऽसम्भावि, ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धसामा-न्यलक्षणम् । तत्र विषय इष्टसाधनत्वप्रकारके कृतिसाध्यत्वप्रकारके च ज्ञाने भासते, अधिकारी कृतिसाध्यत्वप्रकारकज्ञाने भासते, प्र-योजनमिष्टसाधनत्वप्रकारकज्ञाने भासते, सम्बन्धश्च ज्ञानद्वये भा-सते, इति तद्भासनार्थमावश्यकानुबन्धचतुष्टयज्ञानाय तन्निरूपण-मावश्यकमिति ।

१ अनुबन्धचतुष्टयज्ञानं विना ।

२ अनुबन्धान् । अन्योपसृष्टानामपि बुद्ध्या समाकृष्टानान्तदा ( त-च्छब्देन ) परामर्शः । अयमर्थः । यद्यपि सर्वनाम्नामुत्सर्गतः प्रधा-नपरामर्शित्वमिति नियमः सर्ववादिसम्मतस्तथापि तच्छब्दस्य बु-द्धिस्थ-( बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्न-) परा-मर्शित्वमुरीकृतं "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमा" इत्या-दिलक्ष्यानुरोधादिति ।

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ॥
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥३॥

विश्वनाथकृतिना विश्वनाथश्चासौ कृती चेति-कर्म्मधारयः तेन। सन्सुधीः कोविदोबुधः। धीरोमनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः। धीमान्सूरिः कृतीत्यमरः। विश्वनाथनामकेन सुधिया मया द्रव्यैः पृथिव्यादिनवभिः सहिता प्रतिपादकतासम्बन्धेन युक्ता, पृथिव्यादिनवद्रव्यप्रतिपादिकेति यावत्। एवं गुणैः रूपादिचतुर्विंशत्या गुम्फिता युक्ता। सतां भावरूपाणां कर्मणा-मुत्क्षेपणादीनां पञ्चानां ज्ञापिका बोधजनिका। सत् जातिरूपं नतूपाधिरूपं यत्सामान्यमनुगतधर्ममात्रं विशेषाः ( पदार्थभेदाः ) नित्यः समवायरूपस्तैर्मिलिता युक्ता, यद्वा सन्ति भावरूपाणि समीचीनानि वा सामान्यं ( जातिः ) च विशेषाश्च नित्यमिलितं नित्यसम्बन्धः समवायश्चेत्येतानि यस्यां सा। अभावस्य यः प्रकर्षः प्रागभावादिभेदेन वैलक्षण्यं प्राधान्यं वा तस्य उज्ज्वला प्रकाशिका। सत्यः शोभना युक्तय उक्तरूपा यस्यां तथाभूता। एषा बुद्धिस्था सिद्धान्ता वादिप्रतिवादिभ्यां निर्णीता अर्था एव मुक्ता मुक्तामणयस्तासामावली पङ्क्तिः। विष्णोर्व्यापकस्य नारायणस्य ( श्रीकृष्णस्य ) वक्षसि उरःस्थले विन्यस्ता विशेषेण अर्पिता सुकृतिनां पण्डितानां मनसः मुदं सन्तोषं चिरं बहुकालं व्याप्य। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। वितनुतां विस्तारयतु। आशंसायां लोट्।

ग्रन्थे[1] मुक्तावलीत्वरूपणं श्लेषेण—यथा हि मुक्तावली मौक्तिकमाला सद्रव्या साध्यतासम्बन्धेन द्रव्यवती द्रव्यसाध्येति यावत् । गुणेन सूत्रेण गुम्फिता ग्रथिता सुकृतिनः पुण्यवन्तः 'सुकृतीपुण्यवान्धन्य, इत्यमरः तेषां यानि सन्ति समीचीनानि कर्माणि हरिभजनादीनि तेषां ज्ञापिका बोधिका, सत्सामान्यं समीचीना जातिः विशेषो महत्त्वनिर्मलत्वादिस्ताभ्यां नित्यमनवरतं मिलिता सम्बद्धा, अभावे तेजोऽभावरूपेऽन्धकारे सति प्रकर्षेण अतिशयेन उज्ज्वला अर्थप्रकाशिका, अथवा भावस्य भक्तेराश्रयस्य वा प्रकर्षेण उत्तमतया, उज्ज्वला अतिशयेन देदीप्यमाना, सती समीचीना ( गोपुच्छाकारा ) युक्तिर्योजना यस्यां सा । अत्र च मुक्तावलीत्वरूपणेन निर्दोषत्वं सूचितम् । द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । प्रतिपाद्यप्रतिपादकभावश्च सम्बन्धः । पदार्थतत्त्वावधारणञ्च प्रयोजनम्[2] । पदार्थतत्त्वावधारणकामोऽधिकारीति ॥ ३ ॥

---

१ अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायो ग्रन्थः । अस्य च परमप्रयोजनमपवर्ग इत्यनुपदं स्फुटी भविष्यति ॥

२ इदञ्च परमप्रयोजनस्यापवर्गस्य ( मोक्षस्य ) उपायभूतमवान्तरप्रयोजनमिति द्रष्टव्यम् । तथाचोक्तं गौतमेन "पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम" इति।तथाहि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य " इति श्रुत्याम् अरे मुमुक्षुणा आत्मा वै द्रष्टव्यः मुमुक्षोरात्मदर्शनमेवेष्टसाधनमिति यावत् । आत्मदर्शनोपायमाह—श्रोतव्य इत्यादि ( तेनार्थक्रमेण शब्दक्रमस्त्यक्तो भवति ' अग्निहोत्रं जुहोति ' ' ×यवागूं पचती'त्यत्र यथा ) तथाच श्रवणादीनां

---

+ अत्राद्यवाक्ये केनेति द्रव्याकाङ्क्षा द्वितीये च किमर्थमिति प्रयोजनाकाङ्क्षा ततश्च वाक्यैकवाक्यतया शाब्दक्रममनादृत्य पूर्वं यवागूं पचति पश्चात्पक्वया यवाग्वा अग्निहोत्रं जुहोतीति वाक्यार्थः सम्पद्यते।

अथ ग्रन्थारम्भे मङ्गलकरणस्य तन्निबन्धस्य च फलं दर्शयति * विघ्नविघातायेति *

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नूतनेत्यादि।

प्रारिप्सितस्य ग्रन्थस्येत्यादिः। विघ्नानां समाप्ति-

---

तत्त्वसाक्षात्कारे हेतुत्वं बोध्यते। श्रुत्या हि देहादिविलक्षणात्मज्ञाने सत्यप्यप्रामाण्यज्ञाननिवृत्तेर्म्मननसाध्यत्वम्। मननं हि युक्तिभिरनुचिन्तनम्। यथाहुः, श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरिति। तच्चात्मन इतरभिन्नत्वेनानुमानम्। तच्च भेदप्रतियोगीतरज्ञानसाध्यम्। तदर्थं सकलपदार्थनिरूपणमिति मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्। मनना×नन्तरञ्च श्रुत्योपदिष्टेन इन्द्रियाणि विषयेभ्यः प्रत्याहृत्येन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्त्तव्ये वस्तुनि मनः प्रणिधानरूपयोगविधिना श्रुतस्यार्थस्य नैरन्तर्य्येणानुसन्धानरूपनिदिध्यासने कृते सति देहादिविलक्षणात्मसाक्षात्कारो जायते। ततश्च देहादावहमित्यभिमानरूपस्य वासनासहितमिथ्याज्ञानस्य नाशः। वासनानाशे च दोषस्य वासनाविशिष्टरागादेरभावः विशेषणाभावे विशिष्टाभावात्। तादृशरागरूपहेत्वभावे च प्रवृत्तेर्धर्म्माधर्म्मरूपाया अभावोऽनुत्पत्तिः। तदनुत्पादे प्रारब्धकर्माधीनदेहान्यदेहसम्बन्धरूपजन्माभावः। भोगतत्त्वज्ञानाभ्याञ्च प्रारब्धतद्भिन्नकर्मनिवृत्तिरिति जन्माभावे दुःखानुत्पादादात्यन्तिकी दुःखनिवृत्तिः। दुःखनिवृत्तावात्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखासमानकालीनत्वन्तत्रैव च तत्त्वज्ञानस्योपयोगः। तथाच गौतमसूत्रम् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति। ज्ञानादेव च मुक्तिर्मिथ्याज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वात्। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति ( य. ३१ अ. ) श्रुत्या साधनान्तरनिषेधाच्चेति संक्षेपः।

१ आद्यप्रवृत्तिरारम्भः।

२ प्रारब्धुमिष्टस्य।

---

× मोक्षोपयोगित्वमेव विशदयति—मननानन्तरञ्चेत्यादिना।

प्रतिबन्धकदुरितविशेषाणां विघातो विनाशः ( ध्वंसः ) यस्मै[2] समाप्तिकर्मणे तस्मै[3], अथ च विघ्नानामुक्तरूपाणां विघाताय विनाशाय, कृतमनुष्ठितं मङ्गयति प्रापयति सदभीष्टमिति मङ्गलम्, गत्यर्थान्मङ्गतेरौणादिको ऽलच् प्रत्ययः। आ-

१ ननूपसर्गाणां वाचकत्वमते घातपदस्यैवोत्पत्तिमदभाव-( ध्वंस )-परतया विपदमनर्थकमिति चेच्छृणु। विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति नियमः। यथा "स कीचकैर्मारुतपूर्णरन्ध्रै" रित्यत्र 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता' इत्यमरान्मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदस्मारुतपूर्णरन्ध्रैरिति पृथग्विशेषणवाचकपदसमवधाने वेणुमात्रपरमेवमिह घातपदं विपदसमवधाने ऽभावमात्रपरं विपदेन च विशिष्टो घातो ऽभावः ध्वंस इति पर्य्यवस्यति। द्योतकत्वमते तु शङ्कैव नोदेति, विपदस्य पृथगर्थाभावात्।

२ चरमवर्णस्य चरमकृतेर्वा ध्वंसः समाप्तिरिति प्राञ्चः। ज्ञानविशेष एव समाप्तिरिति नव्याः।

३ एतच्च प्राचीनमताभिप्रायेण। ते हि आशुतरविनाशिनः मङ्गलस्य कालान्तरभाविसमाप्तिसाधनत्वानुपपत्त्या विघ्नध्वंसस्य द्वार-( व्यापार- )-त्वमुरीकुर्वन्ति। क्वचित्त्वपूर्वस्यैव। तेन स्वतः सिद्धविघ्नविरहवता कृतस्य मङ्गलस्य न निष्फलत्वापत्तिरेतन्मते। एवञ्च स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन विघ्नध्वंसादिविशिष्टसमाप्तिं प्रति आत्मनिष्ठप्रत्यासत्त्या मङ्गलङ्का*रणमिति पर्यवसितम्। नातश्चरमवर्णध्वंसरूपसमाप्तेराकाशनिष्ठत्वे ऽपि क्षतिः। वस्तुतो ज्ञानविशेष एव समाप्तिरिति न दोषशङ्काऽपि।

४ एतन्मतरहस्यमनुपदम्मूले नव्यास्त्वित्यादिना स्फुटीभविष्यति।

५ यद्यप्येतत्क्रियारूपन्तज्जन्यापूर्वरूपं वा न हि तस्य निबन्धनं सम्भवति, तथापि तत्प्रतिपादकवाक्ये तादर्थ्यात्ताच्छब्द्यमिति न्यायेन मङ्गलपदप्रयोगः। यथा अपूर्वरूपधर्मार्थे यागादौ धर्मपदप्रयोगः।

* मङ्गलपदेनात्र तथाभूताक्रिया तज्जन्यापूर्वं वाऽभिमतन्तस्य

शीर्वादाद्यन्यतमरूपेषु नमस्काररूपं वाक्यं शिष्यशिक्षायै "य- द्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन "इति भगवदुक्तन्यायेनास्म- त्कृतमङ्गलदर्शनेनास्मच्छिष्या अप्येवं कुर्युरित्याभिप्रायेण, निव- ध्नाति–ग्रन्थघटकीकरोति । नूतनेति ।

---

१ अन्यतमत्वञ्च तावदन्यान्यत्वं तावद्भेदाभाववत्त्वं वा । तथा- चोक्तम् 'आशीर्वादनमस्कारवस्तुनिर्देशभेदतः । मङ्गलं त्रिविधं प्रोक्तं ग्रन्थादौ तत्सुखावहमि'ति । तत्राशीर्वादो नाम हिताशंसनम् । नमस्कारस्त्वनुपदं स्फुटीभविष्यति । वस्तुनिर्देशश्च ग्रन्थफलवीजभू- तस्य वस्तुनो निर्वचनम् ।

२ नमस्कारो रूप्यते वोध्यते ऽनेनेति नमस्काररूपं नमस्कार- प्रतिपादकं वाक्यमित्यर्थः । नमस्कारत्वञ्च स्वावधिकोत्कर्षप्रकार- कज्ञानविशिष्टव्यापारत्वम । वैशिष्ट्यं च स्वानुकूलत्वस्वोद्देश्य*क- त्वोभयसम्बन्धेन । उद्देश्यत्वञ्चेच्छाजनकेच्छाविषयत्वमस्ति च त- त्कृष्णादिगतोत्कर्षवोधन इति तन्निरूपकव्यापारजन्यवोधरूपफला- श्रयत्वं कृष्णादेरेवेति तस्यैव करोत्यादिपदसमभिव्याहृतनमः श- ब्दयोगे कर्मत्वन्नान्यस्य तटस्थस्येति वोध्यम् ।

३ शिक्षा हि स्वकर्त्तव्यत्वेन ज्ञानं शिष्याणां शिक्षेति षत्पुरुषः । तथा च शिष्यसमेवतं यन्मङ्गलविषयकं स्वकर्त्तव्यत्वेन × ज्ञानं तस्यै इति वाक्यर्थः ।

---

समवायेनात्मनि प्रत्यासत्तिः । वाक्यरूपमङ्गलस्य तु स्वानुकूलकृ- तिमत्त्वेन । अत्र विघ्नध्वंसादिवैशिष्ट्यं समाप्तौ सामानाधिकरण्ये- न । तत्र समाप्तेरधिकरणतानियामकः स्वप्रतियोगीत्याद्यनुपदोक्त एव सम्बन्धः । विघ्नध्वंसस्य तु स्वरूपसम्बन्ध एव । परन्तु ध्वंसप्रागभावयोः स्वप्रतियोग्यधिकरणदेशवृत्तित्वनियमादस्यात्म- नि प्रत्यासत्तिर्वोध्या ।

* स्वम् उद्देश्यं यस्येति वहुव्रीहौ "शेषाद्विभाषे" तिकप् । निरूपकत्वं षष्ठ्यर्थः । स्वपदेन यस्य वैशिष्ट्यं तज्ज्ञानं धर्त्तव्यम् ।

× प्रकारित्वं तृतीयार्थः । स्वकर्त्तव्यत्वप्रकारकमिति तदर्थः ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

नूतनो नवीनः सद्यः सम्भृतसलिल इति यावत्, तथाभूतो यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य तस्मै, एतेन यथा नूतनः मेघः शीघ्रं वृष्टिफलप्रदस्तथाऽयमपि झटिति भक्ताभिलाषितफलप्रद इति सूचितम्।

सूचितममुमर्थं सदृष्टान्तम्प्रमाणयन्विशिनष्टि—गोपेति। गोपानां या वधूट्यो युवत्यस्तासां यानि दुकूलानि अन्तरीयक्षौमवस्त्राणि, "क्षौमं दुकूलं स्याद्द्वे त्वि"त्यमरः तेषाञ्चौरायापहर्त्रे, एवम्भूताय तस्मै जगत्प्रसिद्धाय, "प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नापेक्षत" इत्यभियुक्तोक्तेर्नात्र यच्छब्दापेक्षा, कर्षति भिनत्ति( विनाशयति )भक्तानां कष्टमिति कृष्णस्तस्मै भगवते वासुदेवाय नमोऽस्तु ॥ १ ॥

अथावतरणग्रन्थेन प्रतिज्ञातेऽर्थे मङ्गलं निष्फलं फलविशेषशून्यत्वादित्यनुमिन्वन् वादी प्रत्यवतिष्ठते—नन्विति। विरोधोक्तौ

---

१ इवार्थगर्भबहुव्रीहौ पूर्वपदं स्वसम्बन्ध्युत्तरपदार्थसदृशे लाक्षणिकमित्यनुगमादत्र नूतनजलधररोरुचिर्यस्येत्येवमेव विग्रहोवोध्यः। एषैव दिगुष्ट्रमुख इत्यादावप्यूह्या।

२ एतत्तत्त्वम्भागवते द० स्क० २२ अध्याये स्फुटम्।

३ अन्येतु गा इन्द्रियाणि पातीति गोपं मनः तस्य वधूटी स्त्री बुद्धिः तस्या दुकूलमावरणमज्ञानन्तस्येत्येवमर्थमाहुः।

४ नमस्कारस्वरूपमुक्तं प्राक्। नमः स्वस्तीत्यादिना नमः पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकात्कृष्णपदाच्चतुर्थी।

५ ननु च स्याद्विरोधोक्तावित्यमरः।

मङ्गलमुक्तरूपं सिद्धान्तिनवीनमते विघ्नध्वंसं प्रति प्राचीनमते समाप्तिं प्रति वा न कारणं कुतः मङ्गलं विनापि नास्तिकादीनां ग्रन्थे किरणावल्यादौ[1] विघ्नानामभावो निर्विघ्नं निर्विघ्नेन परिसमाप्तिः निर्विघ्नपरिसमाप्तिः तस्या दर्शनं ज्ञानं तस्मात् विघ्नध्वंसपूर्वकसमाप्तिज्ञानादित्यर्थः। मङ्गलसत्त्वे ऽपि कादम्बर्यादौ समाप्त्यदर्शनाच्चेत्यपि बोध्यम्[2]। तथा च मङ्गलस्योभयत्र कारणता न प्रत्यक्षप्रमाणगम्या कादम्बर्यादावन्वयतः किरणावल्यादौ व्यतिरेकतो व्यभिचारेण कारणत्वप्रत्यक्षजनने प्रत्यक्षप्रमाणसहकारिणः[3] स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वे ऽग्रिमक्षणे ऽवश्यं यत्सत्त्वं, यदभावे यदभाव इति नियतान्वयव्यतिरेकसहचारग्रहस्यासम्भवात्। अत्र यद्यपि नास्तिकात्मनि जन्मान्तरीयमङ्गलकल्पनान्न व्यभिचारसम्भवस्तथापि भोगादिनापि नास्तिकात्मनि विघ्ननाशसम्भवेन जन्मान्तरीयमङ्गलसन्देहेन व्यभिचारसंशयसम्भवात् इति शङ्काग्रन्थतात्पर्यार्थः। अथ प्राचीनमतेन समाप्तिकारणत्वे ऽनुमित्या सिसाधयिषिते उक्तव्यभिचारसंशयस्य साध्यसन्देहपर्यवसन्नस्य सिद्ध्यभावरूपपक्षतासम्पादकत्वेनानुगुणत्वमेवेत्यभिप्रेत्य मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वाद्यन्नैवं तन्नैवं यथा घट इति

---

१ यद्यपि किरणावलीकर्त्ता उदयनाचार्यः स च न नास्तिकः स्वस्य स्वतःसिद्धविघ्नविरहवत्त्वख्यापनाय तेन तत्र मङ्गलाकरणात्, तथापि मङ्गलाभावे ऽपि समाप्तिसत्त्वप्रदर्शने आस्तिकरचिते किरणावल्या एव दृष्टान्तत्वसम्भवात्तथा व्याख्यातमत एव च मूले आदिपदं तच्चास्तिक संग्राहकमेव। नास्तिक ग्रन्थास्तु सन्त्येव शतमिति तन्नाम विशिष्य नोट्टङ्कितम्।

२ इत्थं चेत्युपसंहारग्रन्थस्वरसात्।

३ अन्वयदलमात्रोपादाने घटकारणसत्त्वे उदासीनसत्त्वे ऽग्रि-

परिशेषानुमानेन मङ्गलस्य समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथमतो विशेष्यासिद्धिनिराशाय फलवत्ता साधयति—आविगीतेत्यादिना। जनः कुलाचारमुचं विगायतीति नैषधे विपूर्वकगैधातोर्निन्दार्थकत्वदर्शनादविगीतो[२] ऽनिन्दितः बलवदनिष्टाननुबन्धीति यावत् यः शिष्टानां फलसाधनांशे भ्रान्तिरहितानां

---

मक्षणे उदासीनसत्त्वादुदासीने तदापत्तिः स्यादतो व्यतिरेकदलम्। तथा सति उदासीनाभावे घटाभावाभावान्न दोषः। कपालाकाशसंयोगतद्व्याप्यकपालद्वयसंयोगातिरिक्तयावद्घटकारणसत्त्वे कपालाकाशसंयोगाभावे घटाभावेन कपालाकाशसंयोगवारणयान्वयदलम्। तद्घटकमवश्यमिति च। तथा सति कपालाकाशसंयोग–तद्व्याप्यकपालद्वयसंयोगेतरकारणसत्त्वे तत्सत्त्वे ऽग्रिमक्षणे ऽवश्यन्तत्सत्ताया अभावान्न दोषः। यावत्कारणसत्त्वे दण्डव्यतिरेक एवा सिद्धो ऽतः स्वेतरेति। दण्डव्यापारभ्रम्यादिसकलकारणसमवधाने दण्डव्यतिरेके घटव्यतिरेको ऽसिद्धो ऽतः स्वव्याप्येतरेति। घटप्रागभावसंग्रहायाग्रिमक्षण इति। अन्यथा घटोत्पत्तिकाले घटप्रागभावे ऽपि घटव्यतिरेकासत्त्वादसंग्रहापत्तेः। सत्त्वञ्चोत्पत्तिः। अभावो ऽपि तस्यैव। अन्यथा तद्दोषतादवस्थ्यापत्तेः।

१ यदितरविशेषाभावकत्वे सति सामान्यवत्त्वरूपो हेतुः परिशेषानुमानम्।

२ तेन श्येनेनाभिचरन्यजेदिति श्रुत्या शत्रुवधकामनया शिष्टानुष्ठिते श्येनयागादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्याभावे ऽपि न व्यभिचारः। श्रुत्या हि यदि ते शत्रुवधः केनाप्युपायेन चिकीर्षित एव तदाभिचर न तु लौकिकोपायेन तं जहीत्येव बोध्यते। नैतावता शत्रोर्वधो विधीयते तेनाऽभिचारेणापि हन्तुर्नरकप्राप्तिर्भवत्यवेति शत्रुवधजनितसुखात्तद्बलवदनिष्टम्।

३ न तु वेदप्रामाण्याभ्युपगन्तॄणां, तेन व्युत्क्रमेण कृते दर्शादौ निष्फलत्वे ऽपि न व्यभिचारः। शिष्टपदञ्च चैत्यवन्दनजलताडनादौ व्यभिचारवारणाय, तस्यापि विधेयतया कृतिविषयत्वात्।

महतामाचारः कृतिः विधेयतया तद्विषयत्वेन । मङ्गलस्य । निष्ठत्वं षष्ठ्यर्थः । मङ्गलनिष्ठे । सफलत्वे । सामान्यतः फलवत्त्वे । सिद्धे । अनुमिते । अनुमिति प्रकारश्च । मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वाद्दर्शादिवदिति । अयम्भावः यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति" श्रुत्या बोधितोऽविगीतशिष्टाचारविषयो दर्श–(अमावस्या–)यागादिः स्वर्गादिरूपफलवत्त्वेन सफलः तथा मङ्गलमपीति । तत्र । मङ्गले । विर्निशेषं न सामान्यमिति न्यायेन फलजिज्ञासायां विशेषत इत्यादिः । विश्वजिन्न्यायेन स्वर्गरूपविशेषफलकतां निराकरोति–सम्भवतीति । दृष्टफलकत्वे सम्भवति अदृष्टस्वर्गादिफलकल्पनाया अ-

---

यद्यपि चैत्यवन्दनादेरपि न कुर्य्यान्निष्फलं कर्मेत्यादिना निषिद्धतया तदनुकूलकृतेरपि नरकरूपबलवदनिष्टजनकतया ऽविगीताचारविषयत्वं सफलकर्मण्येवेति शिष्टपदं निरर्थकं तथापि पश्वादिकृतवृथाचेष्टायां व्यभिचारवारकतया शिष्टपदसार्थक्यमेव। विधिनिषेधयोर्नराधिकारित्वेन तदीयवृथाचेष्टाया निषेधाविषयत्वेन बलवदनिष्टाजनकत्वादितिभावः ।

१ तेनोद्देश्यतया कृतिविषये फले न व्यभिचारः ।

२ बलवदनिष्टाननुबन्धीष्टसाधनम् । अनिष्टे बलवत्त्वञ्च इष्टोत्पत्तिनान्तरीयकाभिन्नत्वम् । तेन बहुवित्तव्ययाऽयाससाध्ये यागादौ न प्रवृत्त्यनुपपत्तिः ।

३ काम्यप्रकरणे "विश्वजिता यजते" ति विधिः श्रूयते । काम्यप्रकणपठितत्वेन तस्य नित्यत्वाभावात्प्रत्यवायपरिहाररूपफलस्याप्यभावात्प्रवृत्त्यर्थं किञ्चित्फलं कल्पनीयं श्रुतौ फलाश्रवणादिति "सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वा" दिति ( अ०४पा०३ सू० १३ ) जैमिनिरसूत्रयत् । सः विश्वजिता साध्यः स्वर्गो भवितुमर्हति तस्य सर्वान् प्रत्यविशिष्टत्वादवैलक्षण्यात्सर्वाभिलषणीयत्वादिति यावत् । तथा च विश्वजिद्यागस्य पुत्रादिफलकत्वे ऽपु-

न्याय्यत्वान्न्यायाऽपेतत्वादित्यर्थः । ननु तर्हि पशुपुत्रादिदृष्टफलकत्वैवास्तु तत्राह—उपस्थितत्वादेति । आरब्धमिदं कर्म निर्विघ्नं परिसमाप्यतामिति ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेन परिशेषानुमाने प्रवृत्तपुरुषकामनविषयत्वप्रकारकोपस्थितिविषयत्वादित्यर्थः। कल्प्यते । अनुमीयते। कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपकारणताग्रह–( ज्ञान–)प्रतिबन्धकज्ञानविषयव्यतिरेकव्यभिचारमुद्धरति—इत्थञ्चेति । मङ्गलस्य समाप्तिफलकत्वे ऽनुमित्या साधिते चेत्यर्थः। यत्र। नास्तिकादिग्रन्थे। तत्। मङ्गलम्। कल्प्यते। अनुमीयते। कार्यात्कारणमनुमेयमिति न्यायेन कार्यरूपसमाप्त्या कारणस्य मङ्गलस्यानुमानमिति भावः । नन्वेवमपि अन्वयव्यभिचारज्ञानं कारणताग्रहविरोधि भविष्यत्येवेत्याशङ्क्यान्वयव्यभिचारं निरस्यति—यत्र चेत्यादिना ।यत्र। कादम्बर्यादौ।बलवत्तरः विजातीयः। तथा चास्य बलवत्तरत्व-

---

त्राद्यार्थिनान्तत्र प्रवृत्तिर्न स्यात्स्वर्गफलकत्वे तु तस्य सर्वेषामिच्छाविषयतया सर्वेषान्तत्र प्रवृत्तिः सम्भवतीति स्वर्ग एव फलत्वेन कल्पयितुमुचितो नान्य इति तन्न्यायपर्यवसितो ऽर्थः।

१ न्यायादनपेता न्याय्या पथ्यतिथीत्यादिनायत्। न न्याय्या ऽन्याय्यास्तस्या भावस्तत्त्वन्तस्मात्।

२ यद्यपि व्यतिरेकव्यभिचारनिश्चये सति कारणताया बाधितत्वेन समाप्तेर्मङ्गलकार्यत्वासिद्ध्या समाप्तिरूपकार्येणं मङ्गलानुमितिरेव न सम्भवति, यदि तु जन्मान्तरीयमङ्गलसन्देहेन न व्यतिरेकव्यभिचारनिश्चयो ऽपि तु सन्देह एव स च न कारणत्वानुमितौ प्रतिबन्धक इति समाप्त्या मङ्गलानुमानं सम्भवत्येवेत्युच्यते तदा ग्राह्यसन्देहपर्यवसन्नतादृशव्यभिचारसन्देहस्याकिञ्चित्करत्वेन तादृशव्यभिचारोद्धारो विफल एव, तथापि नास्तिकात्मनि जन्मान्तरीयमङ्गलसन्देहेन बाधितविषयकत्वसन्देहाद्भवत्यप्रामाण्यसन्देहा-

प्रदर्शनेन मङ्गलस्य तन्निवर्त्तनाक्षमत्वं ध्वनितम्। बलवत्तरत्वरू-
पवैजात्यकल्पने गौरवमुद्भाव्य पक्षान्तरमाह—विघ्नप्राचुर्ये वे-
ति। नन्वेवमपि प्रचुरस्थले( कादम्बर्यादौ )यत्किञ्चिन्मङ्ग-
लेन यत्किञ्चिद्विघ्नध्वंसस्यावश्यकतया स्वजन्यविघ्नध्वंसस-
म्बन्धेन मङ्गलस्य सत्त्वात्कुत एतत्पक्षे समाप्त्यभाव इत्याश-
ङ्कायामाह—प्रचुरस्यैवेति। विघ्नसमसंख्याकस्यैवेत्यर्थः।
चो हेतौ। यतः प्रचुरस्यैव अस्य मङ्गलस्य बलवत्तरविघ्न-
निवारणे ब*लवत्तरादिविघ्ननिवारणे कारणत्वमतः। अत्रा-
दिपदेन प्रचुरविघ्नस्यापि सङ्ग्रहः। तथाच मङ्गलस्य विघ्नसम-
संख्याकमङ्गलत्वेन यावद्विघ्ननाशकतया न तत्र विघ्ननाश इति
भावः। अत्र च विघ्नसमसंख्याकमङ्गलत्वेन हेतुत्वे ऽधिकसं-

---

स्कन्दितकारणतानिश्चयो न तु स स्वकार्याय क्षम इति तदुद्धार
आवश्यक इति भावः।

१ कार्यसाधनक्षमस्यैव हि कारणतया व्यवहारः। अत एव
घटमानय तेन जलमाहरिष्यामीत्युक्तः सच्छिद्रं घटमानीय न हि
कश्चित्कृती भवति।

२ तत्स्थलीयविघ्नेतरावृत्तिसकलविघ्नवृत्तिर्या संख्या तत्स-
जातीया तत्स्थलीयमङ्गलेतरावृत्तिताद्दशसकलमङ्गलवृत्तिर्या संख्या
ताद्दशसंख्यावत एवेत्यर्थः। इदमिह सम्प्रधार्यम्। निरुक्तविघ्ननिष्ठ-
संख्यासजातीयतत्स्थलीयमङ्गलेतरावृत्तिसंख्यावन्मङ्गलत्वेन कार-
णत्वे अधिकसंख्याकमङ्गलादपि स्वल्पविघ्ननाशसम्भव इति। त-
देत ×त्सर्वं प्रकाशकृन्महादेवमतविलसितम्। वस्तुतस्तु प्रतिब-
न्धकसंसर्गाभावविधया सकलविघ्नाभावस्यापि समाप्तिहेतुत्वेन
विघ्नध्वंससम्बन्धेन मङ्गलसत्त्वे ऽपि मङ्गलेतरयावत्कारणान्तर्गत-
यावत्प्रतिबन्धकाभावस्यासत्त्वादेव नान्वयव्यभिचार इत्यत्रैव मूल-
तात्पर्यमिति ध्येयम्।

---

* बलवत्तरविघ्ननिराकरणकारणत्वमिति समस्तः पाठः क्लिष्टः।
× अनुपदोक्तनन्वेवमित्यादिबोध्य इत्यन्तम्।

ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्, विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेत्। न। अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते। इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्, प्रचुरस्यैव चास्य बलवत्तरविघ्ननिराकरणकारणत्वम्, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः (प्राञ्चः)।

---

ख्याकमङ्गलान्न्यूनसंख्याकविघ्ननाशो न स्यादतः प्राचुर्यं वेति अत्र वाकारोऽनास्थायां बोध्यः। ननु तथापि कादम्बर्यादौ विघ्नध्वंसो मा जायतां समाप्तिः परञ्जायतां मङ्गलरूपहेतोः सत्त्वादित्याशङ्क्याह विघ्नध्वंसस्त्विति। तथाच स्वजन्यविघ्नध्वंससम्बन्धेन मङ्गलाभावान्न समाप्तिरिति भावः। आहु—रित्यस्वरसोद्भावनं तद्बीजन्त्वन्यत्र व्यक्तम्॥ इत्येषा प्राचीनमतसरणिः॥

---

१ एतच्च यत्र मङ्गलजन्यविघ्नध्वंसो वर्त्तते तत्र बोध्यम्। तत्र ह्यनन्तस्थलेषु नानाऽपूर्वव्यक्तीनां कल्पने गौरवम्, स्वतःसिद्धविघ्नविरहवता कृतमङ्गलस्थले तु स्वजन्यापूर्वसम्बन्धेन, तथाचान्यतरसम्बन्धेन मङ्गलस्य समाप्तिकारणत्वमभ्युपेयमिति सर्वं चतुरस्रम्।

२ प्रकाशादौ। तत्र हि विघ्नध्वंसद्वारा मङ्गलस्य समाप्तिहेतुत्वे नास्तिकशरीरे व्यभिचारमुद्भाव्य स्वावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन मङ्गल-

नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलम्, समाप्ति-स्तु बुद्धिप्रतिभादिकारणकलापात् । नच स्वतः सि-

---

चिन्तामणिकृतां मतमाह—नव्यास्त्विति ॥ विघ्नध्वंस एवेत्येवकारेण समाप्तिव्यवच्छेदः । फलं प्रवृत्त्युद्देश्यम् । विघ्न-संशयनिर्णययोः शिष्टानान्तदाचरणात् । विघ्नाभावस्याकाङ्क्षित-त्वात् निर्विघ्नं समाप्यतामिति कामनाऽपि नागृहीतविशेषणा बुद्धि-र्विशेष्यमुपसंक्रामतीति न्यायेन विघ्नध्वंसविषयत्वेनोपपन्ना न समाप्तिसाधनत्वव्यवस्थापिका स्वर्गी स्यामितिवदिति तत्ता-त्पर्यम् । ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत आह—समाप्ति-स्त्विति । बुद्धिः ज्ञानं, प्रतिभा तद्विशेषः स्फूर्त्याख्यः । बुद्धि-र्नवनवोन्मेषशालिनी प्रतिभा मतेति वचनात् । प्रतिभादी-त्यादिना विघ्नसंसर्गाभावपरिग्रहः । स्वतःसिद्धविघ्नविरहवतेति ।

---

जन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मङ्गलकार्यतावच्छेदकत्वमाश्रि-त्य तद्द्वारणेऽपि भोगादिनाश्यविघ्नध्वंसपूर्वकसमाप्तौ क्लृप्तनियत-पूर्ववृत्तिताकेन ध्वंसेनैव मङ्गलस्थलीयसमाप्त्युपपत्तेर्म्मङ्गलस्य त-त्रान्यथासिद्धत्वमुक्तम् । व्यापारेण व्यापारिणो नान्यथासिद्धिरि-ति तु यत्र व्यापारिणः प्रमाणबोधितकरणतानिर्वाहाय व्यापार-स्य कारणत्वं कल्प्यते यथा यागादेः श्रुतिबोधितस्वर्गादिहेतुतानि-र्वाहायापूर्वं, तत्रैव । अत एव काशीमरणान्मुक्तिरित्यत्र काशी-मरणस्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात्पञ्चम्याः प्रयोजकत्वार्थ-कतया श्रुतिसमर्थनं सङ्गच्छते । प्रकृते च प्रतिबन्धकाभावस्य का-र्यमात्रे हेतुताया मङ्गलकारणतां विनापि क्लृप्ततया मङ्गलस्यान्यथा-सिद्धत्वं दुष्परिहरमेवेति तद्भावः ।

१ महामहोपाध्यायमैथिलश्रीगङ्गेशशर्म्मणाम् ।

२ अकस्माद्भवा । ठक् । अव्ययानाम्भमात्रे टिलोपः । अकुतश्चि द्भवा यत्किञ्चित्कारणानियम्येति यावत् ।

द्धविघ्नाविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरि-
ति वाच्यम्। इष्टापत्तेः, विघ्नशङ्कया तदाचरणात्। तथैव
शिष्टाचारात्। न च तस्य निष्फलत्वे तद्बोधकशिष्टाचारा
नुमितवेदाप्रामाण्यापत्तिरिति वाच्यम्। सति विघ्ने
स्त्रतः अकुतश्चित्कारणात्सिद्धो निष्पन्नो यो विघ्नविरहो वि-
घ्नात्यन्ताभावः सोऽस्यास्तीति तद्वान् तेन, विघ्नात्यन्ताभाववते-
त्यर्थः। ननु निष्फले प्रवृत्तिरेव कथं 'न कुर्यान्निष्फलं कर्मे'ति
तन्निषेधात् 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते' इति महदुक्ते-
श्चेत्यत आह– विघ्नशङ्कयेति। संशयनिश्चयसाधरणविघ्नज्ञानमेव
तत्र प्रवर्त्तकमिति भावः। तदाचरणात्। मङ्गलाचरणात्। ननु
विघ्नसंशये मङ्गलाचरणमेवासिद्धन्तत्राह– तथैवेति। शिष्टाचा-
रात्। विषयतासम्बन्धेन[1] मङ्गले इति शेषः। ननु निर्विघ्नपुरुषा-
नुष्ठितमङ्गलस्थले ऽन्वयव्यभिचारेण विघ्नध्वंसं प्रति मङ्गलस्य
कारणता बाधिता, तथाच बाधितार्थबोधकत्वाद्वेदस्याप्रामाण्य-
मिति[2] "विघ्नध्वंसकामो मङ्गलमाचरे"दिति शिष्टाचारानुमित-
श्रुतेः कारणताप्रमापकत्वमङ्गीकर्त्तुर्म्मते शङ्कां निरस्यति– न
चेति। तस्य। निर्विघ्नपुरुषानुष्ठितमङ्गलस्य। तद्बोधके-
ति। मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः। स-
ति विघ्न इति। विघ्नध्वंसं प्रति मङ्गलं, प्रतियोगिविधि[3]-
या विघ्नश्चे[4] कारणन्तथाचोपदर्शितस्थले मङ्गलरूपैककारणसत्वे-
ऽपि, प्रतियोगिरूपापरकारणाभावेन विघ्नध्वंसरूपकार्यानुदयो-
पपत्तौ कारणताया अबाधितत्वेन न कारणताबोधकवेदाप्रामा-

१ आचारस्य कृतिरूपत्वेन सविषयत्वात्।

२ अस्य शङ्कामित्यग्रिमेणान्वयः।

३ ध्वंसं प्रति प्रतियोगिनः कारणत्वमिति।

४ दण्डादिन्यायेनोभयं कारणमित्यर्थः।

तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं तु विघ्नध्वंसविशेषे कारणं, विघ्नध्वंस-

---

ण्यमिति भावः। तन्नाशस्यैवेति। मङ्गलादित्यादिः। तथाच केवलदण्डाद्घटानुत्पत्तावपि दण्डो घटकारणमिति वाक्यस्य यथा नाप्रामाण्यं स्वेतरयावत्कारणसमवहित[1]दण्डस्य तत्र दण्डपदेन ग्रहणात्तथोक्तश्रुत्याऽपि इतरकारणसमवाहितमङ्गलाचरणेन विघ्नध्वंसं भावयेदित्येव बोध्यत इति नाप्रामाण्यन्तस्या इति भावः। अत एव। नाशं प्रति प्रतियोगिनः कारणत्वादेव तद्बोधकवेदाप्रमाण्यमिति। प्रायश्चित्तस्य पापनाशकत्वबोधक[2]वेदाप्रामाण्यमित्यर्थः। ननु मङ्गलं न विघ्नध्वंसे कारणं विनापि मङ्गलं विनायकस्तव[3]पाठादितो विघ्ननाशदर्शनात्, इत्थं च परस्परजन्यविघ्नध्वंसे व्यभिचारादेकस्यापि कारणत्वं वक्तुमशक्यमत आह– मङ्गलश्चेति। विघ्नध्वंसविशेषे। मङ्गलानन्तरजायमानविघ्नध्वंसं प्रति। विघ्नध्वंसविशेषे चेति। विनायकस्तवपाठाद्यनन्तरजायमानविघ्नध्वंसं प्रति चेत्यर्थः। एवमन्यत्रापि कार्यैक्ये कारणानैक्ये कार्यतावच्छेदककोटौ कारणाव्यवहितो[4]त्तरत्वनिवेश ऊह्यः। ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं

---

१ समवहितः समवधानवान् एककालिकैकाधिकरणवृत्तीति यावत्।

२ स च वेदः पापनाशकामः प्रायश्चित्तमाचरेदित्याकारकः। पापसमानाधिकरणेन प्रायश्चित्तेन पापनाशं भावयेदित्यर्थकः।

३ सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठत इति स्मृतेः। पाठादीत्यादिना प्रायश्चित्तपरिग्रहः।

४ तत्तत्कारणानन्तर्यनिवेशोऽस्य तात्पर्यमवसेयम्।

विशेषे च विनायकस्तवपाठादिः। क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं, प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्ध-

---

तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्न स्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या, तच्च न सम्भवति स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्तिसाधनत्वाभावादिति शङ्कां निरस्यति क्वचिच्चेति[1]। नन्वेवं सत्यननुगमोऽतोऽनुगतेन रूपेण कारणत्वे बीजमाह—प्रतिबन्धकेति । संसर्गाभावस्य । संसर्गाभावत्वेन संसर्गाभावस्य । तथाच विघ्नसंसर्गाभावत्वेनानुगतरूपेण हेतुत्वान्न पूर्वोक्तव्यभिचार इति भावः। अत्र च तत्तद्विघ्नप्रतियोगिकसंसर्गाभावत्वेन हेतुता न तु विघ्नाभावकूटत्वेन तथासति विघ्नप्रागभावादीनामेकत्रासम्भवेन समाप्तिर्न स्यादिति बोध्यम् । यत्र च मङ्गलं विनापि समाप्तिस्तत्र विघ्नसंसर्गाभावसामान्याभाववति[1] समाप्तेर्दर्शनाद्व्यतिरेकव्यभिचारमाशङ्क्य निषेधति—इत्थञ्चेति । दुरितध्वंसकल्पने तज्जनकीभूतमङ्गलकल्पने च गौरवादाह—स्वतःसिद्धे-

---

१ वस्तुतस्तु आहुरित्यनेन सूचितामन्यथासिद्धिं प्रकटयति क्वचिच्चेति । विघ्नात्यन्ताभाव एवेत्येवकारेण विघ्नध्वंसस्य तद्वारकमङ्गलस्य च व्यवच्छेदः । समाप्तिसाधनम् । समाप्त्यव्यवहितपूर्ववर्त्तितया निश्चितः। तथाच तेनैव मङ्गलस्थलीयसमाप्तिनिर्वाहे मङ्गलस्य तज्जन्यविघ्नध्वंसस्य चान्यथासिद्धिः । ध्वंसप्रागभावयोरत्यन्ताभावेन समं विरोधे मानाभावात् । ध्वंसस्थलेऽपि अत्यन्ताभावसत्त्वादिति भावः । नन्वन्योन्याभावभिन्नाभावत्वेनैव लाघवाद्धेतुतास्त्वत आह प्रतिबन्धकसंसर्गेति । प्रतिबन्धकसत्त्वेऽपि सम्बन्धान्तरावच्छिन्नाभावस्य सत्त्वात्कार्योत्पादवारणाय तत्तत्सं-

विघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः।

संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणमपि दर्शि-

ति। तथाच यत्र मङ्गले सत्यपि न समाप्तिस्तत्र मङ्गलाद्वि-घ्नध्वंसो भवत्येव समाप्त्यभावस्तु विघ्नभूयस्त्वात्तन्मङ्गलोत्तरो-त्पन्नाद्विघ्नाद्वेत्यवधेयम्। इत्येषानवीन (मणिकार) मतसरणिः।

इति मङ्गलवादः।

## अथेश्वरसिद्धिः।

अथ "तस्मैकृष्णायनम" इत्यनेन भगवतो नमश्शब्दार्थ-प्रकारीभूताऽपकर्षावधित्वमुक्तन्तद्युक्तम्भगवति मानाभावादि-त्याशङ्कामपनिनीषुस्स्व-( नैयायिक-) मतेनेश्वरसद्भावेऽनुमानं-

---

सर्गावच्छिन्नप्रतियोगिताकाभावत्वेनैव हेतुत्वस्य वाच्यत्वेन न ध्वंसस्य हेतुना तस्य संसर्गावच्छिन्नत्वे मानाभावादिति भावः। दुरितध्वंसः। दुरितध्वंससामग्रीप्रयुक्तः। स्वतःसिद्धः। दुरित-कारणाभावप्रयुक्तः। इति केचिद्याचक्षते।

१ तथा च यत्र मङ्गलं विनैव समाप्तिस्तत्र विघ्ननाशकमङ्गला-सत्त्वेन विघ्नस्य व्यतिरेकव्यभिचारो दुर्वार एवेति भावः।

२ अथ ध्वंसस्य प्रतियोग्यधिकरणदेशवृत्तित्वात्समाप्तिविघ्न-ध्वंसयोराकाशात्मनिष्ठयोः कथं कार्यकारणभाव इति चेदुच्यते स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति वि-शेषणतासम्बन्धेन विघ्नसंसर्गाभावत्वेन हेतुतेति।

३ प्रत्यक्षं हि द्विविधं बाह्यम्मानसञ्च तत्राद्यं रूपिद्रव्यनिय-तन्तदभावादेवेश्वरे न प्रसरति, द्वितीयमपि न परात्मनः परेण-मनसा प्रत्यक्षवारणायात्मप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीय-मनःसंयोगत्वेन हेतुत्वावश्यकतया ईश्वरे तदभावात्। श्रुतिस्त्वी-श्वरोक्ता तत्सन्देहे नैव प्रमाणम्। उपमानन्तु शक्तिमात्रसाधकम-प्राकिञ्चित्करमेवेति।

तं भवति। तथाहि। यथा घटादिकार्यं कर्तृजन्यं तथा

प्रमाणयन्विशिनष्टि–संसारेति तदर्थमाह–संसार एवेत्यादिना। निमित्तेति। वीजं हि वृक्षादेर्निमित्तकारणं न तु समवायिकारणं तन्नाशानन्तरमेव तदवयवैरङ्कुरारम्भात्। प्रकाशे तथाकथनन्तु सवायिकारणावश्यकत्वार्थकम्बोध्यम्। प्रमाणम्। अनुमानरूपमित्यादिः। तथाहीति। अनुमानप्रकारं दर्शयति–यथेति–दृष्टान्ते। तथेति–दार्ष्टान्तिके। तदाह–क्षित्यङ्कुरादिकमपीति। क्षित्यं-

---

१ वीजस्य समवायिकारणत्वकथनन्तु।

२ क्षितित्वस्याङ्कुरत्वस्य च पक्षतावच्छेदकत्वे ऽस्य तात्पर्यम्। तत्र क्षितिः सकर्तृकेति प्रथमप्रयोगे क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यस्य घटादावंशतः सिद्धसाधनम्, पक्षतावच्छेदकावच्छेदेन तथात्वे परमाणौ बाध इत्यतोऽङ्कुरत्वस्य पक्षतावच्छेदकत्वानुधावनम् तत्र च सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे क्वाप्यङ्कुरे जीवीयकृतिसाध्यत्वाभावेन नांशतः सिद्धसाधनम्। न वा वाधो नित्याङ्कुरस्याभावादिति भावः। ननु क्षितित्वावच्छेदेनाङ्कुरत्वावच्छेदेन वा कार्यत्वहेतुना सकर्तृकत्वानुमितिर्न सम्भवति कार्यत्वरूपहेतोरप्रयोजकत्वात्। न च कार्यत्वं यदि कृतिजन्यत्वव्यभिचारि स्यात्तदा कृतिजन्यतावच्छेदकं न स्यादित्यनुकूलतर्कसत्त्वान्नाप्रयोजकत्वमिति वाच्यम्। कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावेनोक्ततर्कानवतारात्। उपपादयिष्यतेचैतदुपरिष्टादित्यभिप्रेत्याहादीति, तेन सर्गाद्यकालीनघटनिष्ठतद्व्यक्तित्वस्य संग्रहः। तथाच सर्गाद्यकालीनो घटः कुलालकृतिजन्यः, घटत्वादेतत्कालिकघटवदित्यनुमितौ कुलालकृतित्वेन घटत्वेन कार्यकारणभावसत्त्वान्नाप्रयोजकत्वशङ्कावसरः। नचैवमीश्वरस्य कुलालत्वापत्तिः। घटकरणसमर्थस्यैव कुलालत्वेनेश्वरे तस्येष्टत्वात्। अत एव नमः कुलालेभ्यः कर्म्मारेभ्यश्चेत्यादिश्रुतिरपि सङ्गच्छते। यदि च सर्गाद्यस्य विवादग्रस्तत्वेन सर्गाद्यकालीनस्य घटस्य पक्षत्वे पक्षासिद्धिरिति मन्यते तदाऽस्तु खण्डघट एवादिपदार्थः। तत्पूर्वमपि कुलालकृत्यसत्वेन तत्पक्षकानुमानेनेश्वरसिद्धेरावश्यकत्वात्।

क्षित्यङ्कुरादिकमपि । न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः । न च शरीरा-

---

ङ्कुरादिकं सकर्तृकं ( कर्तृजन्यं ) कार्यत्वात् घटवदित्यनुमानस्वरूपम् । सकर्तृकत्वञ्च कर्तृजन्यत्वं कर्तृत्वञ्चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमिति प्राञ्चः[1] । नव्यास्तु विशेष्यतासम्बन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वं सकर्तृकत्वम्[2] । विशेष्यतासम्बन्धावच्छिन्नेत्युक्तेरदृष्टद्वाराऽस्मदीयकृतिजन्यत्वस्य पक्षे सत्वेऽपि न सिद्धसाधनम् । तादृशजनकतायाः स्वजन्यादृष्टसम्बन्धावच्छिन्नताया विशेष्यतासम्बन्धावच्छिन्नत्वाभावात् । कृतित्वावच्छिन्नत्वोपादानन्तु स-

---

अत्र कार्यपक्षकानुमानमायोजन—( कर्म ) धृत्यादिपक्षकानुमानस्योपलक्षणन्तथोचाक्तमुदयनाचार्यैः कुसुमाञ्जलौ ।

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय इति ॥

एतेषामुदाहरणान्यत्रैव प्रकरणे प्रकाशे व्यक्तानि तत एवावधेयानि ।

१ यद्यपि कर्तृत्वङ्कृतिमत्त्वमेव सम्भवति, तथाप्यपरोक्षज्ञानादेश्चिकीर्षादिकं प्रति कारणत्वप्रदर्शनाय तथोक्तिरित्यवधेयम् ।

२ तेषामयं भावः । सकर्तृकत्वानुमानेन नित्यज्ञानेच्छाकृतिमानेवेश्वरः साधनीयोऽन्यथा नित्यज्ञानेच्छयोरसिद्धिप्रसङ्गादतः सकर्तृकत्वमुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वरूपमेव साधनीयं तथाचैतदनुमानेन नित्यज्ञानेच्छाकृतीनां सिद्धौ तत्पक्षकगुणत्वहेतुकानुमानेन लाघवादेकद्रव्याश्रितत्वसिद्धौ तदेव द्रव्यमीश्वर इति नित्यज्ञानेच्छाकृतिमानीश्वरः सिध्यतीति । एतादृशानुमितौ च लाघवज्ञानसहकारेण ज्ञानेच्छाकृतिषु नित्यत्वमेकत्वञ्च भासते, तच्च स्वाधिकरणावृत्तिस्वभिन्नज्ञानकत्वमेव । स्वपदेन यत्रैकत्वम्भासते तत् । अत्र च स्वभिन्नज्ञानत्वावच्छेदेन

जन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति

विषयत्वेन कृतेः कारणत्वे ज्ञानेच्छयोर्नान्यथासिद्धिः सम्भवति तयोरपि सविषयकत्वेन कारणत्वात्। स्वेन तयोरन्यथासिद्धत्वस्यैवाङ्गीकरणीयत्वादित्यभिप्रायेण। समवायसम्बन्धावच्छिन्नत्वप्रवेशस्तु यदुपादानिका प्रवृत्तिस्तत्रैव समवायेन कार्यमिति नियमस्य तन्त्वादौ घटापत्तिवारकस्य निर्वाहायैवेति बोध्यम्। नास्तिकाशङ्कां निरस्यति—नचेति। क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वादाकाशवदिति परोक्तानुमानस्वरूपम्। सत्प्रतिपक्ष इति। सन् विद्यमानः प्रतिपक्षः विरोधिपरामर्शो यस्य सः। तथाच पूर्वानुमाने कर्त्तृजन्यत्वव्याप्यकार्यत्ववत्क्षित्यङ्कुरमिति परामर्शः। तद्विरोधा च कर्त्रजन्यत्व—(कर्त्तृजन्यत्वाभाव–) व्याप्य–शरीराजन्यत्व(शरीरजन्यत्वाभाव–)वत्क्षित्यङ्कुरमिति परोक्तः परामर्शः। इत्थञ्च तद्वत्ताबुद्धिम्प्रति तदभाववत्ताबुद्धेरिव तदभावव्याप्य-

---

स्वाधिकरणावृत्तित्वं विवक्षणीयम्। अन्यथेश्वरीयज्ञाननानात्वेऽपि स्वभिन्नजीवज्ञानादौ स्वाधिकरणावृत्तित्वसत्त्वेनेश्वरज्ञानादेरेकत्वासिद्धिप्रसङ्गात्। स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वैकत्वमेव ज्ञानगतमेकत्वमिति भावः। तच्च नित्यज्ञानैकत्व एव सम्भवति न तु तद्भेदेऽपीति द्रष्टव्यम्।

१ तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकबुद्धिम्प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकबुद्धेर्यथा प्रतिबन्धकत्वं तथा तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावाभावाधिकरणनिरूपितवृत्तित्वानवच्छिन्नप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताकबुद्धेरपि प्रतिबन्धकत्वम्। अत एव ह्रदो वह्निमानिति बुद्धेर्ह्रदो वह्न्यभाववानिति बुद्धिवद्वह्न्यभावव्याप्यजलवान् ह्रद इति बुद्धिरपि प्रतिबन्धिकेतिरीत्याऽप्यूह्यम्।

वाच्यम्, अप्रयोजकत्वात्। मम तु कर्तृत्वेन कार्यत्वेन वत्ताबुद्धेरपि प्रतिबन्धकत्वात्परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः स्यादिति कथमीश्वरसिद्धिरिति शङ्काग्रन्थतात्पर्यार्थः। उत्तरमाह—अप्रयोजकत्वादिति। व्यभिचारशङ्कानिवर्त्तकानुकूलतर्करहितत्वादित्यर्थः। स्वमतेऽनुकूलतर्कमाह- ममत्विति। कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवेति। नचान्वयव्यतिरेकाभ्यां घटत्वाद्यवच्छिन्नकार्यम्प्रति कुलालादिकृतित्वेनैव हेतुत्वादेतादृशकार्यकारणभावे मानाभाव इति वाच्यम्। घटत्वपटत्वादिभेदेनानन्तकार्यकारणभावकल्पनापेक्षया कार्यत्वावच्छिन्नं प्रति कृतित्वेन हेतुत्वकल्पनस्यैवौचितत्वात्। न च तन्तुवायकृतिसत्त्वे घटापातिवारणाय विशेषतोऽन्वयव्यतिरेकाभ्यां घटत्वकुलालकृतित्वादिना विशेषरूपेण कार्यकारणभावस्यावश्यवक्तव्यतया कार्यत्वकृतित्वाभ्यां सामान्यरूपेण कार्यकारणभावकल्पनं व्यर्थमिति वाच्यम् "यद्विशेषयोः कार्य-

---

१ शरीराजन्यत्वं कर्त्रजन्यत्वाभाववत्यपि कदाचित्स्यात्तथा च तत्कर्त्रजन्यत्वव्यभिचारि स्यादिति शरीराजन्यत्वं कर्त्रजन्यत्वव्यभिचारि न वेत्याकारिका या व्यभिचारशङ्का तन्निवर्तको योनुकूलतर्कस्तयोः ( हेतुसाध्ययोः ) कार्यकारणभावादिस्तस्याभावाद्। अयमर्थः। शरीराजन्यत्वकृत्यजन्यत्वयोरत्यन्ताभावरूपत्वेन नित्ययोर्व्याप्तिग्राहककार्यकारणभावरूपानुकूलतर्काभावादिति। इदमुपलक्षणम्। शरीराजन्यत्वहेतौ स्वरूपासिद्धिपरिहाराय शरीरपदप्रवेशो तस्य व्यभिचारावारकत्वेन शरीराजन्यत्वस्य साध्यसम्बन्धितानवच्छेदकत्वेन व्याप्यत्वासिद्धिप्रसङ्गश्चेत्यपि द्रष्टव्यम्। तथा चोक्तमुदयनाचार्यैरेकामसिद्धिं परिहरतो द्वितीयापत्तेरिति।

२ यदि कार्यत्वं सकर्तृकत्वव्यभिचारि स्यात्तदा कार्यं कर्त्तृजन्यं न स्यादित्येवम्।

३ सामान्यत इत्यादिः।

कार्यकारणभाव एव अनुकूलतर्कः । 'द्यावाभूमी जनयन्देव एकः', 'विश्वस्य कर्ता भुवनस्य गोप्ता'

---

कारणभावः असति बाधके तत्सामान्ययोरपि स" इति न्यायेन तस्यावश्यकत्वात् । न चैतादृशन्यायोऽप्रामाणिक इति शङ्क्यम् । कार्यत्वावच्छिन्नाभावे तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात् कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वे लाघवात् ।

१ मीमांसकमते चाक्षुषं प्रति रूपं, स्पार्शनं प्रति स्पर्शः कारणम्, बहिरिन्द्रियजन्यप्रत्यक्षसामान्ये न रूपं न वा स्पर्शः कारणं, प्रभावाय्वोः प्रत्यक्षे व्यभिचारात् । नापि गुणः कारणमतिप्रसङ्गात् । नापि रूपस्पर्शान्यतरत्कारणमन्यतरत्वस्यापि गुरुत्वाद्विनिगमनाविरहेण गुरुतरकारणताद्वयप्रसङ्गाच्चेत्यतोऽत्र न्यायेऽसति बाधक इत्युक्तम् ।

२ कार्यत्वकृतित्वाभ्यां सामान्यरूपेण कार्यकारणभावस्य ।

३ तथाच लाघवमूलक एव यद्विशेषयोरिति न्यायो नाप्रमाणिक इति भावः । वस्तुतस्तु कारणतावच्छेदकधर्मावच्छिन्नाभाव एव कार्याभाव प्रयोजक इति न नियमः किन्तु स्वरूपसम्बन्धरूपप्रयोजकत्वप्रतीत्यनुरोधेन लघ्वनतिप्रसक्तधर्मावच्छेदेन कल्प्यत इति नियमः । तथाच लाघवादेव कारणतावच्छेदककृतित्वावच्छिन्नप्रतियोगिताकैकाभावस्य कार्याभावप्रयोजकत्वं कृतित्वेन कार्यत्वेन कार्यकारणभावमन्तरापि सूपपादमेवेति तत्र प्रमाणाभाव एव । सामान्यकार्यकारणभावखण्डनाक्षेपे समाधीयते वृद्धैः । तथाहि कृतित्वेन कार्यत्वेन सामान्यकार्यकारणभावानङ्गीकारे घटादौ प्रवृत्तिर्नस्यात् विशेषकार्यकारणभावस्य तत्तद्व्यक्तिगततया तद्घटोत्पत्तेः प्रकृततत्कार्यकारणभावस्याज्ञातत्वात् सामान्यकार्यकारणभावे तु तद्बलादेव प्रवृत्तिरुदेतीति मन्तव्यम् ।

इत्यादय आगमा अप्यनुसन्धेयाः ॥ १ ॥

पदार्थान्विभजते—

---

एवञ्चोक्तानुमानेनेश्वरसिद्धौ तदुच्चरितत्वेन वेदस्य प्रामाण्यनिश्चयाद्वेदोऽपीश्वरे प्रमाणमित्याह–द्यावाभूमी जनयन्निति। आदिनेश्वरमुपासीत, यः सर्वज्ञः स सर्वविदित्यादीनां परिग्रहः ॥ १ ॥

( इतीश्वरसिद्धिः )

अथोद्देशग्रन्थः।

पदार्थान्विभजते इति। स्वसमभिव्याहृतपदार्थतावच्छेदकधर्म्मव्याप्यमिथोविरुद्धयावद्धर्म्मप्रकारकज्ञानानुकूलो व्यापारो विभजतेरर्थः। स्वं विभजतिः तत्समभिव्याहृतपदं पदार्थानिति तदर्थतावच्छेदकं ( तदर्थे विशेषणीभूतो धर्म्मः ) पदार्थत्वम् तद्व्याप्या मिथः परस्परं विरुद्धाः ( परस्परासमानाधिकरणाः ) ये धर्म्मा द्रव्यत्वादयस्तत्प्रकारकं ज्ञानं द्रव्यं गुणाः कर्म्म सामान्यं विशेषाः समवायो ऽभावा इति, तदनुकूलः ( तज्जनकः ) व्यापारः द्रव्यं गुणा इति पद्यप्रयो-

---

१ द्यौश्च भूमिश्चेति द्वन्द्वः, दिवोद्यावेति दिव्शब्दस्य द्यावादेशः।

२ सर्वज्ञः सामान्यरूपेण सर्वविषयकज्ञानवान्। तद्वत्त्वं जीवानामस्त्यत उक्तं सर्वविदिति विशेषरूपेण सर्वविषयकज्ञानवानिति तदर्थः।

३ उद्देशश्च नामधेयेन विवेक्तव्यपदार्थमात्राभिधानम्, तं विना लक्षणन्नोपपद्यते। उद्दिष्टस्यैव हि लक्षणं भवति ततश्च परीक्षेति। एतेन "त्रिविधा चास्य शास्त्रस्य प्रवृत्तिर्भवति उद्देशो लक्षणम् परीक्षा चेति" भाष्योक्ता शास्त्रप्रवृत्तिविधा प्रदर्शिता भवति। प्रसङ्गाच्च व्याख्यायां लक्षणाभिधानमिति बोध्यम।

४ विपूर्वक भज् धातोः "इक्श्तिपौ धातुनिर्देशे" इति श्तिप् प्रत्ययः।

द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावाः पदार्थाः सप्त कीर्त्तिताः ॥२॥

गरूपः स एव विभागः । एवमुत्तरत्र यथायथमूह्यम् । मूलेऽशि-
ष्यावधानाय प्रतिजानीते–द्रव्यङ्गुणा इति । द्रव्यमिति जात्ये-
कवचनम् । गुणा इति बहुवचनान्तः पाठः, गुणत्वस्य जाति-
त्वाभावस्फोरणाय व्यक्तिभेदाभिप्रायकः । एतत्तत्वमग्रे स्फु-
टीभविष्यति । यद्वा जात्याख्यायामप्येकवचनं न नियतं " जा-
त्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या " मिति पाणिनि( सूत्र
१–२–५८ ) स्वरसादित्यभिप्रायकः । संयोगापेक्षयाकर्म्मणो-
ऽतिरिक्तत्वं नास्तीति भूषणमतं निराकर्त्तुमाह—

---

१ यथास्वं यथायोग्यमिति यावत् ।

२ प्रतिज्ञा च स्वकर्त्तव्यत्वेन निर्देशः । अत एवाग्रे "निरूप्यन्त इति शेष" इति वक्ष्यते । द्रव्यादिनिरूपणस्यैव स्वकर्त्तव्यत्वेन प्रतिज्ञानात् ।

३ जातावेकवचनम् । एतेनात्रजातिपक्षो दर्शितो भवति । यत्र हि जातेरुद्देश्यतावच्छेदकत्वं तत्र जातिपक्षः । यथात्र द्रव्यत्वजातिमानेकः पदार्थ इत्येवं वाक्यार्थे निष्पन्ने एकत्वविशिष्टपदार्थत्वं द्रव्यत्वजातिमन्तमुद्दिश्य विधीयते, इत्ययं जातिपक्षः । एवं न ब्राह्मणं हन्यादित्यादावपि ब्राह्मणत्वावच्छेदेन हननाभावोविधीयते इति सः ।

४ एतेनात्र व्यक्तिपक्षो दर्शितो भवति । यत्र हि जात्याद्युपलक्षितं तद्यक्तित्वमुद्देश्यतावच्छेदकीकृत्य किञ्चिद्विधीयते तत्र व्यक्तिपक्षः । यथा ब्राह्मणाय कन्यादेयेति वाक्ये ब्राह्मणत्वोपलाक्षिततद्यक्तित्वावच्छेदेन कन्यादानं विधीयते इति तत्र व्यक्तिपक्ष एव न जातिपक्षः ।

द्रव्यं गुणा इति । अत्र सप्तमस्याभावत्वकथनादेव

---

तथाकर्म्मेति । यथा गुणः पृथक्पदार्थस्तथा कर्म्मापीत्यर्थः । कर्म्मेति जात्येकवचनम् । सामान्यन्नित्यमेकमनेकानुगतमित्येकवचनेन दर्शितम् । सविशेषकम् । विशेषैः सहवर्त्तमानमर्थाद्विशेषः । समवायस्त्वेक एवेत्येकवचनम् । अभावो ऽधिकरणात्मक एवेति प्राभाकरमतं दूषयितुं पुनस्तथेत्युक्तमुक्तवदर्थकम् । अभावा इति बहुवचनान्तपाठ एव युक्तः । अभावत्वस्य जातित्वाभावात् । पदार्थाः सप्तेति । निरूप्यन्त इति शेषः । नन्वन्ये पदार्थाः कुतो नोक्ता इत्यत आह—कीर्तिता इति । तथाचैतेभ्यो ऽन्ये पदार्थाः सन्त्येव न, कणादप्रभृतिभिरनुक्तत्वादिति भावः । नन्वितरेषु ग्रन्थेषु षड् भावपदार्थास्सप्तमस्त्वभाव इति निरूपितम् । तथैवात्र कुतो न निरूपितमित्याशङ्क्याह मुक्तावल्यां सप्तमस्येति । यद्यपि सप्तमस्याभावत्वकथने ऽपि तदितरेषां भावत्वं दुर्लभमेव न ह्येकस्य ब्राह्मणत्वे प्रतिपादिते तदितरेषामब्राह्मणत्वं प्रतिपादितम्भवति, तथाप्येतस्य विभागवाक्यतया परस्परासङ्कीर्णव्याप्यधर्म्मकथनस्यैव विभागरूपतया द्रव्यादीनामभावत्वेऽभावत्वं विभाजकमेव न स्यादिति द्र-

---

१ तथाच पदार्थाः सप्तेत्यस्य द्रव्यत्वादिरूपा ये पदार्थविभाजकाः सप्तोपाधयस्तदन्यतमवन्तः पदार्था इत्यर्थः । सप्तपदोपादानञ्च पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमत्वव्याप्यमिति व्याप्तिलाभाय सप्तैव पदार्था इति परिसंख्यातुम् ।

२ यथाचोक्तमुदयनाचार्यैर्लक्षणावल्याम् पदार्थो द्विविधो भावाभावभेदात् । तत्र नञर्थविषयकप्रत्ययरहितो भावः स षोढा द्रव्यादिभेदादित्येवम् ।

षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्य-

---

व्यादीनामभावत्वाभावात्परिशेषाद्भावत्वं प्राप्तमिति भावः। भावत्वञ्च समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वम्। नञर्थविषयकप्रत्ययरहितत्वं वा। तद्विपरीतमभावत्वं, प्रतियोगिसापेक्षप्रतीतिविषयत्वं वा, नञ्पदजन्यप्रतीतिविषयत्वन्तु न तत्, ध्वंसे तदभावादिति कश्चित्। प्राप्तम्। नुमानादित्यादिः। तत्प्रकारश्च द्रव्यादयो भावाः, अभावत्वव्यधिकरणधर्म्मवत्त्वादिति। द्रव्यत्वादौ विभाजकधर्म्मेऽभावत्ववैयधिकरण्यन्तु विभागानुपपत्त्योपपादितमेव। न कृत इति। तेषामिति शेषः। नन्वन्ये पदार्थाः कथं न सन्ति न्यायग्रन्थे षोडशपदार्थनिरूपणादित्याशङ्क्य नैयायिकानामपि मते सप्त पदार्था इत्यविरुद्धं प्रमाणादिषोडशपदार्थानां गौतमोक्तानां द्रव्यादिसप्तपदार्थेष्वन्तर्भूतत्वादित्याह–एते चेति। उक्तार्थे भाष्यसम्मतिमाह–प्रतिपादितश्चेति। एवमेवेति। द्रव्यगुणकर्म्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः। षोडशानामत्रैवान्तर्भावादिति प्रतिपादितमित्यर्थः। अन्तर्भावप्रकारस्तु प्रकाशादौ व्यक्तो विस्तरभिया नेह तन्यते। भाष्यस्यार्षत्वात्तेजीयसां न दोषाय वन्हेः सर्वभुजोयथेति वचनात्तत्प्रणेतुर्महर्षेः क्वचिदनुपपन्नार्थप्रतिपा-

---

१ एकार्थसमवायः स्वसमवायिसमवेतत्वं समवेतत्वञ्च समवायेन वृत्तित्वं तच्च यद्यपि समवाये नास्ति तस्य स्वरूपेणैव वृत्तित्वात्तथापि समवायत्वस्य संसर्गतानवच्छेदकत्वेऽपि स्वरूपत्वेन समवायस्यैव सम्बन्धत्वे न तस्य समवायेन वृत्तित्वक्षतिः।

२ अभावत्वम्।

विरुद्धाः, प्रतिपादितं चैवमेव भाष्ये । अत एवोप-
मा[न]चिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्या-
दीनामतिरिक्तपदार्थत्वमाशङ्कितम् । ननु कथमे-
त एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्त-
पदार्थत्वात् । तथाहि, मण्यादिसमवहितेन वन्हिना

दनमपि न दोषाय स्यादिति चिन्तामणिकृतां सम्मतिमाह
अतएवेति । मण्यादिसमवधाने सति वन्हिना दाहोत्पत्तिवार-
णाय मण्यादेः कारणविघटकत्वरूपा प्रतिबन्धकता वाच्या सा
च वन्हिनिष्ठदाहानुकूलशक्तिरूपकारणविघटकतयैव निर्वहति,
इत्थञ्च मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्त्या शक्तिः सिध्यति
सा च न द्रव्यगुणकर्मान्यतमरूपा गुणादिवृत्तित्वात्, नापि सा-
मान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वादित्थञ्च प-
दार्थाः सप्त कीर्त्तिता इति मूलमयुक्तमित्यभिप्रायेण प्राभाकरः
शङ्कते—नन्विति । अतिरिक्तेति । सप्तपदार्थातिरिक्तेत्यर्थः । उक्त-
मेवार्थम्प्रदर्शयति—तथाहीति । मण्यादीति । आदिना मन्त्रौषध्या-
दिपरिग्रहः । समवहितेन, समीपवर्त्तिना । दाहो वह्निजन्या
रूपपरावृत्तिः । मण्याद्यतिरिक्तस्य प्रतिबन्धकत्वं खण्डयति—त-
च्छून्येनेति । मण्यादिसमवधानशून्येनेत्यर्थः । ननु वन्हौ यदि
दाहानुकूला शक्तिरस्ति तदा मण्यादिसत्त्वे कुतो न दाह इति

---

१ मैथिलमहामहोपाध्यायजगद्गुरुगङ्गेशोपाध्यायानाम् ।

२ मणिरत्र चन्द्रकान्तः । आदिना मन्त्रौषध्यादिः । एषु प्रत्येकं
प्रतिबन्धकताऽस्ति ।

३ अत्र कारणपदेन कारणतावच्छेदकः कार्यानुकूलो धर्मो वि-
वक्षित एवमुत्तरत्रानुकूलपदेनापीत्यनुपदं स्फुटीभविष्यति, यद्यपी-
त्यादिना ।

४ रूपनाशः ।

दाहो न जन्यते तच्छून्येन तु जन्यते तत्र मण्या-
दिना वन्हौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन
मण्याद्यपसारणेन च जन्यते इति कल्प्यते। एवं सा-
दृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्त-

---

चेत्तत्राह– तत्रेति । मण्यादिसमवधाने सतीत्यादिना पूर्वो-
क्तयुक्त्या शक्तिसिद्धावित्यर्थः । दाहानुकूलेति। यद्यप्यनुकूल-
त्वं कारणत्वमेव तथापीह कारण तदवच्छेदकसाधारणं, तेन
शक्तेः कारणतावच्छेदकरूपत्वेऽपि न क्षतिः। नाश्यत इत्यस्य
इति कल्प्यते इत्यनेनान्वयः। तथा च वह्निनिष्ठशक्तित्वावच्छिन्नं
प्रति मणित्वेन मन्त्रत्वेनौषधित्वेनेत्येवं पृथक् पृथग् नाशकत्वो-
पगमेन मण्यादिसत्त्वदशायां शक्तेरभावादेव न दाह इति भावः ।
ननु मण्यादेर्यदि शक्तिनाशकत्वं तर्हि सत्युत्तेजकविशिष्टमण्या-
दावपसारिते वा दाहानापत्तिरित्यत आह— उत्तेजकेन मण्या-
द्यपसारणेन चेति । अत्र चकारो वाकारार्थे। एवमतिरिक्तां
शक्तिं प्रसाध्य सादृश्यस्याप्यतिरिक्तपदार्थतामवस्थापयति– ए-
वमित्यादिना। अतिरिक्त इति। क्लृप्तसप्तपदार्थातिरिक्त इत्य-
र्थः। षड्भावानन्तर्भूतत्वे सत्यभावानन्तर्भूतत्वादिति हेतुः पू-
रणीयः। तत्र सत्यन्तासिद्धिं निरस्यति– तद्धीति । सादृश्यं
हीत्यर्थः। सामान्येऽपीति । सामान्येतरवृत्तित्वे सति सामा-
न्यवृत्तित्वादित्यर्थः । तेन सामान्यत्वे न व्यभिचारः। अन्व-
यव्यतिरेकित्वे सतीत्यपि पूरणीयन्तेन प्रमेयत्वादौ न व्यभिचा-
रः। नचोक्तान्यतरसम्बन्धेन सत्तावत्त्वरूपभावत्वे हेतुसत्त्वाद्व्य-

---

१ अत्रोत्तेजकपदेन सूर्यकान्तमणिमन्त्रौषध्यादिर्गृह्यते, मणिपदेन
तु चन्द्रकान्त एवेत्यवोचाम। एषु प्रत्येकमुत्तेजकताऽस्ति ।

र्हितं भवति सामान्येऽपि सत्वात्, यथा गोत्वं नित्यं तथाऽश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः। नाप्य-भावे, सत्त्वेन प्रतीयमानत्वादिति चेन्न। मण्याद्य-

भिचार इति वाच्यम्। तस्य द्रव्यादिषट्कान्यतमत्वरूपत्वेन[1] साध्यस्यापि तत्र सत्त्वात्। यथेति। यदि सादृश्यं द्रव्याद्यन्तर्भूतं स्यात्तदा द्रव्यादेः सामान्यावृत्तित्वेन यथा गोत्वं[2] नित्यं तथा ऽश्वत्वमित्यबाधितप्रतीतिर्न स्यादित्यर्थः। अभावेऽन्तर्भावमाशङ्क्य निराचष्टे–नापीति। यद्यप्यतिरिक्ताभावमनङ्गीकुर्वतः प्राभाकरस्य मतेऽभावेऽन्तर्भावस्य चिन्ता न सम्भवति तथापि परमतमभ्युपेत्येदं निराकृतमिति भावः। सत्त्वेन। भावत्वेन। प्रतीयमानत्वात्। प्रमीयमानत्वात्प्रमाविषयत्वा[3]दिति यावत्। एवं प्राभाकरमतमुपपाद्य दूषयति मण्यभावेति। अतिरिक्तशक्तिकल्पनां पूर्वोक्तनाश्यनाशकभावकल्पनाञ्चापेक्ष्य लाघवाद्दाहत्वावच्छिन्नं प्रति मण्यभावविशिष्टवन्हित्वादिनैव हेतुताकल्पनमुचितमिति भावः। दाहादिकम्प्रतीति। अस्य हेतुत्वं कल्प्यते इत्यनेनान्वयः। आदिना वन्हेः सङ्ग्रहः, मण्यादिसत्वे वह्नेरप्यनुत्पत्तेः। तथा च मण्यादिरूपप्रतिबन्धकसद्भावान्न दाहवन्ही इति भावः। ननु पूर्वक्षणवृत्तित्वविशिष्टमण्यादेरभावस्य मण्यादिसत्त्वदशायामपि सत्त्वात्कुतो न दाहवन्ही। किञ्च मण्या-

---

१ अन्यतमत्वञ्च तावदन्यान्यत्वं, तावद्भेदाभाववत्त्वं वाऽभावात्मकमेव। तत्र षड्भावानन्तर्भूतत्वरूपं साध्यमस्त्येवेति भावः।

२ गोत्वप्रतियोगिकसादृश्यवदश्वत्वम्, एवमश्वत्वप्रतियोगिकसादृश्यवद् गोत्वमिति बोधः। सादृश्यघटकधर्मश्च क्वचिज्जातिरूपः यथा पृथिवीत्वेन घटसदृशः पट इत्यादौ, क्वचिदुपाधिरूपः यथा प्रकृते नित्यत्वम्। यथा वा चन्द्रसदृशं मुखमित्यादावाल्हादकत्वादि।

३ तेन भ्रान्तस्याभावे भावत्वभ्रमेऽपि तत्र न व्यभिचारः।

भावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण म-
ण्यभावादेरेव वा हेतुत्वं कल्प्यते। अनेनैव सामञ्जस्ये
द्यभावविशिष्टवन्हित्वं वन्हिविशिष्टमण्याद्यभावत्वं वा कारणताव-
च्छेदकमित्यत्र विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूत-
कार्यकारणभावद्वयापत्तिश्चेत्यत आह—मण्यभावादेरेव वेति। स्वात-
न्त्र्येण। पृथक् पृथग् (मण्यभावो वह्निश्चेत्येवम्) न तु विशिष्टवैशिष्ट्या-
वगाहिरूपेण। तथाच प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं
बाधज्ञानस्यानुमितेर्प्रतिबन्धकत्वानापत्तेः। किन्तु कारणीभूता-
भावप्रतियोगित्वम्। तच्च मण्यभावस्य हेतुत्व एवोपपद्यते न

---

१ अन्यतर—(एकतर-) पक्षस्थापिका युक्तिर्विनिगमना तस्याः
विरहोऽभावस्तेन।

२ यद्यपि वह्नित्वेन मण्यभावत्वेन कारणत्वाङ्गीकारेऽपि कारण-
ताद्वयमेवाभ्युपगन्तव्यम्भवति तथापि लघुधर्म्मावच्छिन्नन्तत्।
मण्यभावविशिष्टवह्नित्वादिना कारणत्वे तु गुरुधर्मावच्छिन्नकार-
णताद्वयं कल्पनीयमापद्येतेति भावः।

३ मण्यभावो वह्निश्चेति द्वयम् एवम्मन्त्राभावो वह्निश्चेति द्व-
यम्। औषधाभावो वह्निश्चेति द्वयमित्येवमित्यादिपदार्थः।

४ अयम्भावः। यत्र परामर्शानन्तरं लौकिकप्रत्यक्षरूपो बाध-
निश्चयस्तत्र बाधनिश्चयोत्पत्तिद्वितीयक्षणे परामर्शनिष्ठशक्तिनाशो
वक्तव्यः तथाच बाधेनानुमितिप्रतिबन्धो वाच्यः स च न सम्भवति
तत्पूर्वं परामर्शाभावादेवानुमित्यनुत्पादसम्भवात्। बाधद्विती-
यक्षणेऽनुमित्यापत्तेश्च तत्पूर्वं शक्तिविशिष्टपरामर्शसत्त्वादिति।

५ ननु प्रतिबन्धकत्वस्येदृशत्वे कारणीभूतवह्निरूपाभावप्रतियो-
गिनि वह्न्यभावेऽतिव्याप्तिः। नचेष्टापत्तिः, सम्भवति कारणाभावे
प्रतिबन्धकताव्यवहाराभावात्कारणसत्त्वे कार्यानुत्पत्तिप्रयोजक-
स्यैव प्रतिबन्धकत्वेन व्यवह्रियमाणत्वात्। एवं स्वप्रागभाव *

---

* प्रागभावस्य हि स्वप्रतियोगिनियतपूर्ववृत्तित्वेन कारणत्व-
मभ्युपयन्ति।

ऽनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्।

त्वतिरिक्तशक्तिसत्त्वं इति भावः। ननु मण्यभाववन्ह्योर्द्वयोर्हेतुत्वापेक्षयातिरिक्तशक्तेरेकस्या एव हेतुता युक्ता लाघवादित्यत आह– अनेनैवेति। मण्यभावादेर्दाहादिकं प्रति हेतुत्वकल्पनेनैवेत्यर्थः। साँमञ्जस्ये। मण्यादिसमवधानदशायां दाहवारणे। अनन्तेति। एकत्रैव मण्याद्यपसारणेन शक्तिरुत्पन्ना ऽनुपदमेव तदानयनेन च विनष्टेत्येवमल्पीयसैव कालेनानन्तानां शक्तिव्यक्तीनाङ्कल्पनमित्यनौचित्यं शक्तिकल्पनायाः। इदमुपलक्षणम्। प्रतियोगिप्रागभावयोः, प्रतियोगिध्वंसयोः, शक्तिनाशमण्योः, शक्तिमण्यपसारणयोश्च कार्यकारणभावकल्पनाऽपि स्या-

प्रतियोगिनि स्वस्मिन्स्वप्रतिबन्धकत्वा?पत्तिश्चेति चेन्न। तादात्म्यातिरिक्तसम्बन्धावच्छिन्ना या कारणता तदाश्रयीभूतो यो भावभिन्नोऽत्यन्ताभावस्तत्प्रतियोगित्वस्य विवक्षितत्वात्। कारणताविशेषोपादानाच्च स्वात्यन्ताभावप्रत्यक्षे स्वस्य प्रतिबन्धकत्वापत्तिः परास्ता, विषयस्य तादात्म्यसम्बन्धेनैव प्रत्यक्षे हेतुत्वात्।

१ अतिरिक्तशक्त्यङ्गीकारे मण्यभावस्य च कारणत्वे युक्तिविरहात्कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य मणावसम्भवादितिभावः।

२ वस्तुतस्त्वेतदपि न विचारसहम्। मण्याद्यभावस्य प्रतिबन्धकसंसर्गाभावविधया कारणताऽभ्युपगमे ऽतिरिक्तकल्पनाभावात्। प्रत्युतानन्तशक्तिकल्पना तत्र कारणत्वकल्पना चेति कल्पनाद्वयं गौरवपराहतं परमते ऽतिरिच्यते। किञ्च। शक्तेः स्वरूपतो दाहादिकारणत्वाभावेन वह्निनिष्ठशक्तित्वेन शक्तिमद्वह्नित्वेन वा दाहकारणत्वमित्यत्र विनिगमनाविरहादुभयथापि कारणता ऽभ्युपगन्तव्या भवेदित्यन्यदपि गौरवं शक्तिकल्पनायामिति।

३ समञ्जसोऽनुकूलस्तस्य भावः। सामञ्जस्ये आनुकूल्ये।

१ प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन कारणतया नात्रापीष्टापत्तिः सम्भवति।

नचोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात्। सादृश्यमपि न पदार्थान्तरं किं तु तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्, यथा चन्द्रभिन्नत्वे

दित्यपि बोध्यम्। उत्तेजकाभावेति। तथाच केवलं मणिर्न प्रतिबन्धकः किन्तु उत्तेजका[1]भावकूटविशिष्टः। तदभावश्चोत्तेजकसमवधानेऽप्य[2]स्तीति न व्यभिचार इति भावः। इत्येवं शङ्कां निराकृत्य सादृश्यं निराकरोति—सादृश्यमपीति। न पदार्थान्तरम्। न क्लृप्तसप्तपदार्थातिरिक्तम्। स्वमते तत्स्वरूपमाह— किन्त्वित्यादिना। तद्भिन्नत्वे सति। तत्प्रतियोगिकभेदवत्त्वे[3] सति। तद्गताः—तत्रासाधारण्येन वर्त्तमाना ये भूयांसो धर्म्मास्तद्वत्त्वे·

---

१ उत्तेजकस्याननुगमात्तदभावकूटेत्युक्तम्।

२ विशिष्टाभावो हि त्रिविधो भवति, केवलविशेषणाभावप्रयुक्तः, केवलविशेष्याभावप्रयुक्तः विशेषणविशेष्योभयाभावप्रयुक्तश्च तत्रोत्तेजक वह्नि मण्येतात्रितयसमवधाने उत्तजेकाभावरूपविशेषणाभावप्रयुक्तः प्रथमः, तत्रैव मण्यपसारणे उभयाभावप्रयुक्तस्तृतीयः, तत्रैव उत्तेजकस्याप्यपसारणे ( वह्निमात्रसत्त्वे ) तु केवलविशेष्याभावप्रयुक्तो द्वितीय एवेति ध्येयम्। अत्रेदम्बोध्यम्। अभावीयविशेषणतासम्बन्धेन दाहत्वावच्छिन्नं प्रति उद्देश्यतादैशिक*विशेषणतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानाधिकरण्यरूपन्तद्वैशिष्ट्यं तदवच्छिन्नस्य मण्यादेर्दैशिकविशेषणतोद्देश्यतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याभावीयविशेषणतासम्बन्धेन हेतुत्वमिति। एतेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकमण्यभावस्य तत्समवधानेऽपि वह्न्यधिकरणे सत्त्वाद्दाहापत्तिरिति परास्तम्। ३ भेदवत्त्वञ्च भेदः सचान्योभाव एव।

४ धर्म्मवत्त्वमपि धर्म्मः सोपि जात्यादिरूप एवेति नातिरिक्तं सादृश्यम्।

---

* इदञ्च भावाभावसाधारणदैशिकविशेषणतामभ्युपेत्योक्तम्। मन्त्रार्थमुद्देश्यतासम्बन्धनिवेशः।

सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥३॥

द्रव्याणि विभजते । क्षित्यबिति । क्षितिः पृथि-

---

मित्यर्थः । सादृश्यनिरूपके चन्द्रादावतिव्याप्तिवारणाय सत्यन्तम् । अनुयोगितासम्बन्धेन तादृशधर्म्मवत्त्वविवक्षणे तु न देयमेवं । नव्यास्तु सादृश्यस्य साक्षात्परम्परया वा तत्त्वज्ञानोपयोगित्वाभावेनाधिक्येऽपि न "पदार्थाः सप्ते" ति मूलोक्तप्रतिज्ञाहानिः[२] । एवमधिकरणत्वप्रतियोगित्वादेरपीत्याहुः । सादृश्यलक्षणं ग्राहयति– यथेति । इतिशब्दः श्लोकव्याख्यासमाप्तिद्योतकः । २ ।

इति पदार्थसामान्यविभागग्रन्थः ।

क्षित्यादिपदानां प्रकृतोपयुक्तानर्थानाह[३]— क्षितिः पृ·

---

१ सत्यन्तविशेषणमित्यादिः ।

२ तत्त्वज्ञानोपयोगिपदार्थविभागस्यैव तत्र (मूले) अभिप्रेतत्वात् ।

३ तेन क्षयापृशब्दप्रतापदेवादिशेषग्रहायमादिदान * देहावयवानां नात्र क्षित्याद्यष्टकेन यथाक्रमं ग्रहणम् । तथाच देहोऽस्यास्तीति देही देहविशिष्ट इत्येतद्देहिपदार्थे वैशिष्ट्यं न समवायेन, अपि तु स्ववृत्तिचेष्टाजनककृतिमत्त्वसम्बन्धेनेतीश्वरेऽपि तदस्त्येव भूतावेशन्यायेन संसार्यदृष्टवशाद्वा तस्य देहाभ्युपगमात् । वस्तुतस्तु अपाणिपाद इत्यादिश्रुत्येश्वरस्य न शरीरमित्यात्मत्वजात्यवच्छिन्न एव देहिपदप्रतिपाद्यः । ईश्वरेऽपि सा जातिरस्त्येवेत्यात्मनिरूप·

---

* दिश् अतिसर्जन इति दानार्थकदिश्धातोः क्विनि कुत्वे दिक्शब्दो दानार्थोऽपि सम्भवति ।

वी, आपो जलानि, तेजो वह्निः, मरुद्वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मनः,

---

थिवीत्यादिना। पृथिव्यप्तेजोवाय्वात्मानः पञ्चैव द्रव्याणि आकाशादेरीश्वरात्मन्येवान्तर्भूतत्वान्मनसश्चासमवेतभूतेऽन्तर्भावादिति केषाञ्चिन्मतं निराकर्तुमाह— एतानि नवद्रव्याणीति। आकाशादीनां पृथग्द्रव्यत्वं यथावसरं व्यवस्थापयिष्यते। मूले द्रव्याणीत्यत्र द्रव्यपदं द्रव्यत्वजातिविशिष्टार्थकं न तु गुणाश्रयत्वविशिष्टार्थकं गौरवात् द्रव्यत्वस्य जातित्वे मानं पृच्छति मुक्तावल्यां–किं मानमिति। किंशब्दोऽत्र प्रश्ने। ननु द्रव्यं द्रव्यमित्यनुगतप्रतीतिरेव द्रव्यत्वजातिसाधिका भविष्यति गोषु गोत्वसाधिका गौर्गौरित्यनुगतप्रतीतिवदिति-

---

णे स्फुटीभविष्यति। केचित्तु देहीत्यस्य ज्ञानवदर्थकत्वाज्जीवेश्वरयोः संग्रह इति वदन्ति।

१ तथाच द्रव्याणीत्यस्य द्रव्यत्वजातिमन्तीत्यर्थः। इत्थञ्च द्रव्यत्वजातिमत्त्वमेव द्रव्यस्य लक्षणम्। लक्षणलक्ष्यतावच्छेदकयोरैक्येऽपि बाधकाभावात्। गौरवबीजं तु समवायसम्बन्धेन गुणोत्पत्तिम्प्रति तादात्म्येन द्रव्यस्य कारणत्वपरिरक्षणायोत्पन्नं द्रव्यं क्षणमगुणन्तिष्ठतीति नियमः। तथाच तल्लक्षणावच्छेदेन द्रव्येऽव्याप्तिवारणाय गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षणीयतया जातिघटितलक्षणस्यैवाभ्युपगन्तव्यत्वेऽन्ते रण्डाविवाहन्यायेनादावेव तथैव वक्तुमुचितमिति। अत्र ( गुणघटितलक्षणे ) गुणादावतिव्याप्तिवारणाय गुणसमानाधिकरणेति जातिविशेषणम्। सत्तामादायातिव्याप्तिवारणाय सत्ताभिन्नेति। द्रव्यगुणान्यतरत्वमादायातिव्याप्तिवारणाय जातीति समवायेन तादृशधर्म्मवत्त्वतात्पर्यग्राहकम्। अतः कालिकादिसम्बन्धेन तद्वत्त्वमादाय नातिव्याप्तिः।

२ अनेकेष्वेकाकारकं प्रत्यक्षमनुगतप्रतीतिरुच्यते जातेश्च प्रत्यक्षमिन्द्रियसंयुक्तसमवायेनेति वक्ष्यते।

एतानि नव द्रव्याणीत्यर्थः । ननु द्रव्यत्वजातौ किं मानं नहि तत्र प्रत्यक्षं प्रमाणं घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न । कार्यसमवायिकारणताव-च्छेदकतया संयोगस्य विभागस्य वा समवायि-

---

चेत्तत्राह–नहीति। तत्र। द्रव्यत्वजातौ प्रत्यक्षम्। उक्तानुगतप्रतीतिरूपम्। घृतेति। तथाच घृतादिषु शास्त्रज्ञानशून्यानां द्रव्यत्वज्ञानाभावेन सकलद्रव्यसाधारणद्रव्यत्वजातिसिद्धिर्न भविष्यतीति भावः। अयमभिसन्धिः। अनुगताकृतिव्यङ्ग्या हि गोत्वादिजातिर्यथा गवादिषु प्रत्यक्षविषया भवति न तथा नवद्रव्यानुगता काचिदाकृतिरस्ति घृतादिषु एकैकद्रव्येष्वपि काठिन्यद्रवत्वयोरनियतत्वादिति। द्रव्यत्वजातिसिद्धावनुमानं प्रमाणयति कार्येत्यादिना। अस्य द्रव्यत्वजातिसिद्धेरित्यनेनान्वयः। प्रकारित्वं तृतीयार्थः। प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकात्।

प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम्।
अवच्छेदगतां बुद्धिं प्रकारत्वादि शंसतीति हर्युक्तेः।

तेन रूपेण द्रव्यत्वजातिसिद्धिरित्यर्थः। तथाहि। "समवायिकारणत्वं[2] द्रव्यस्यैवेति" वक्ष्यमाणमूलोक्तदिशा कार्यमात्रं प्रति द्रव्यमेव समवायिकारणम्, तत्र कार्य-

---

१ एतेन द्रवतीतिद्रव्यमितिव्युत्पत्त्या स्वर्णरजतादिषु यौगिकी द्रव्यत्वानुगतप्रतीतिः सर्वेषामिति केषाञ्चिदुक्तिर्घृतादिषु द्रवत्ववत्सु द्रव्यव्यवहाराभावादापातरमणीयेति सूचितम्। अतएव घृतजतुप्रभृतिष्विति विशिष्य मुक्तावल्यामुक्तम्। तथाच नायं क्रियाप्रवृत्तिनिमित्तो द्रव्यशब्दोऽपि तु जातिप्रवृत्तिनिमित्त इत्यभ्युपेतव्यम्।

२ यत्समवेतं कार्यम्भवत्यवेहि समवायिजनकन्तदिति वक्ष्यमाणमूलोक्तदिशाऽयमर्थोलभ्यते।

३ कार्यकारणयोरेकाधिकरणवृत्तित्वन्तु नियतमेव। तत्रेदमवधे-

स्य समवायः प्रत्यासत्तिः, कारणस्य तादात्म्यम्। यत्र समवायेन कार्यन्तत्र तादात्म्येन द्रव्यमिति नियमात्। तथाच (द्रव्यनिष्ठा) कार्यसमवायिकारणता (समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना कारणता सा) किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वाद् या या कारणता सा सा किञ्चिद्धर्म्मावच्छिन्ना (निरवच्छिन्नकारणताया असम्भवात्) घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणतावद् इत्यनुमानेन द्रव्यनिष्ठकारणतायाः समनियतम्

---

यम्। १ कारणतावच्छेदकसम्बन्धेन कारणाधिकरणे कार्यं येन सम्बन्धेन वर्त्तते स सम्बन्धः कार्यतावच्छेदकः, कार्यता च तत्सम्बन्धावच्छिन्नोच्यते। एवं कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कारणं येन सम्बन्धेन वर्त्तते, (यद्वा, येन सम्बन्धेन कारणस्याभावो नास्ति) स सम्बन्धः कारणतावच्छेदकः। कारणता च तत्सम्बन्धावच्छिन्नोच्यते। एवं कार्यतायाः समनियतो धर्मः कार्यतावच्छेदकः कार्यता च तद्धर्म्मावच्छिन्नोच्यते। एवं कारणतायाः समनियतो धर्म्मः कारणतावच्छेदकः कारणता च तद्धर्म्मावच्छिन्नोच्यते। इत्थं कार्यतायाः कारणतायाश्चावच्छेदकद्वयं भवति सम्बन्धो धर्म्मश्च। कार्यतायाः कारणतायाश्च परस्परनित्यसापेक्षत्वात्परस्परनित्यसापेक्षयाश्च निरूप्यनिरूपकभावसम्बन्धनियमादयमर्थो निःसृत इति।

२ ननु किमि × दं द्रव्य-( त्वावच्छिन्नस्य * ) कार्यतावच्छेदकं कार्यत्वं, न तावत् प्रागभावप्रतियोगित्वरूपम्, द्रव्यकार्यत्वाभाववति ध्वंसेऽपि प्रागभावप्रतियोगित्वस्य सत्त्वेनातिप्रसक्ततया द्रव्यकार्यतावच्छेदकत्वानुपपत्तेः। अतएव न जातिरूपमपि, सामान्यादीनां सामान्यानधिकरणत्वनियमस्य वक्ष्यमाणत्वात्, नाप्युपाधिरूपम्। अनुगतानतिप्रसक्तस्य तस्य दुर्वचत्वादिति चेत्, प्रागभावप्रतियोगित्वे सति भावत्वन्तदिति गृहाण।

३ समनियतधर्म्मस्यैवावच्छेदकत्वमिति हि नियमः। तद्व्याप्य-

---

× समवायसम्बन्धावच्छिन्नम्। तेन सम्बन्धान्तरावच्छिन्नद्रव्यकार्यताया ध्वंसे सत्त्वेऽपि नोक्तविरोधः। *निरूपितत्वं षष्ठ्यर्थः।

(अन्यूनानतिप्रसक्त-) न्द्रव्यत्वमेवेति तदेव कारणतावच्छेदक-विधया जातिरूपं सिध्यति । नन्वेतावता (जन्यसद्रूप) कार्यत्वावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणता सिद्धा तत्र निर्विशेषं न सामान्यमिति न्यायेन तत्कार्यङ्किमपि घटाद्यात्मकमेव विशिष्य वक्तव्यं, तत्प्रति समवायिकारणं तादात्म्येन कपालादिकमेव, तदवच्छेदकतया कपालत्वादि जातिः सिध्येन्नाम, न तु द्रव्यत्वमतिप्रसक्तत्वात् । अन्यथा घटकार्यम्प्रति तन्तुरूपद्रव्यस्य कारणतापत्तेः। इत्थञ्च सामान्यतः कार्यत्वेन द्रव्यत्वेन कार्यकारणभावोऽभ्युपगन्तुमशक्य इत्यरुचेराह—संयोगस्येति। अस्य समवायिकारणतावच्छेदकतयेत्यत्रान्वयः स्पष्ट एव। तथा च संयोगत्वावच्छिन्नकार्यम्प्रति द्रव्यस्य समवायिकारणत्वादुक्तविधया संयोगसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिः । नन्वेतदपि वक्तुमशक्यम् । नित्यसंयो-

---

त्वे सति तद्व्यापकत्वं समनियतत्वम् ।

१ कार्यतावच्छेदकतया कारणतावच्छेदकतयाऽनुगतप्रतीत्या वा जातिः सिध्यतीति हि महतामनुगमः । स एवात्रावरोहक्रमे-* णादृतः ।

२ विशेषरूपेण कार्यकारणभावानभ्युपगमे ।

३ पूर्वोक्तानुमितिप्रकारेण ।

४ समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना कारणता सा किञ्चिद्धर्मावच्छिन्नेत्येवम् ।

५ विभुद्वयसंयोगस्य नित्यत्वात् । एतच्च परमताभिप्रायेणोक्तम् । स्वमते तु अप्राप्तयोश्च या प्राप्तिः सैव संयोग इति (११५ का०) वक्ष्यमाणतल्लक्षणान्नित्यप्राप्तयोः विभ्वोः संयोगो नास्त्येवेति बोध्यम् ।

---

* पूर्वमनुगतप्रतीत्या साधनमुपन्यस्य पश्चात्कारणतावच्छेदकतया तत्साधनोपन्यासात् ।



कारणतावच्छेदकतया द्रव्यत्वसिद्धेरिति । ननु दशमं द्रव्यं तमः कुतो नोक्तं, तद्धि प्रत्यक्षेण गृह्यते, तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं, तच्च गन्ध-

---

गे कार्यत्वाभावेन संयोगत्वस्यातिप्रसक्तत्वात्कार्यतानवच्छेदकत्वादित्यरुचेराह—विभागस्यवेति । तथाच विभागसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्येवमुक्तादिशाऽनुमित्या द्रव्यत्वजातिसिद्धिरिति । ननु दशमद्रव्यस्य तमसः सत्त्वान्नवद्रव्याणीत्यनुपपन्नमित्यभिप्रायेण मीमांसकः शङ्कते नन्विति । ननु तमःसत्त्वे मानाभावेन तन्नोक्तानित्याशङ्क्य तमःसाधकप्रत्ययप्रमाणमाह—तद्धीति । तमो हीत्यर्थः । प्रत्यक्षेण । चक्षुरिन्द्रियरूपप्रत्यक्षप्रमाणेन । ननु तमःसिद्धावपि तस्य द्रव्यत्वे किम्मानमित्याशङ्क्य तस्य द्रव्यत्वेऽनुमानम्प्रमाणयति—तस्येति । तमस इत्यर्थः । चकारो द्रव्यत्वमित्यनेनान्वेति, तथा च तमो द्रव्यं रूपवत्त्वादित्यनुमानं तमसो द्रव्यत्वे प्रमाणम् । ननु तमसि रूपसत्त्वे मानाभावः । न च नीलं तम इति प्रतीत्या तत्सिद्धिः । प्रतीतेर्भ्रान्तित्वाद् । अतो हेत्वन्तरमाह—कर्मवत्त्वाच्चेति । समवायेन कर्मवत्त्वादित्यर्थः । न च स्वरूपासिद्धिः । चलति च्छायेति प्रतीत्या कर्म्मवत्त्वसिद्धेः । तमसः क्लृप्तद्रव्येष्व-

---

१ नवद्रव्याणीत्यस्य नवैव द्रव्याणीति परिसंख्याक्रमेणार्थः । पञ्चपञ्चनखा भक्ष्या इतिवत् ।

२ एतदुपलक्षणम् । परत्वाद्याश्रयत्वादित्यपि बोध्यम् । इदं तमः परमिदमपरमिति प्रतीतेः ।

३ यद्यपि नीलं तम इतिप्रतीतेरिवास्यापि प्रतीतेर्भ्रमत्वकल्पनसम्भवात्पूर्वोक्तावतरणासङ्गतिः । तथापि वह्न्यादितेजस्यौपाधिकरक्तादिरूपभ्रमस्य सर्वसिद्धतया रूपवत्ताप्रतीतौ भ्रमत्वकल्पनासम्भवः क्रियावत्ताप्रतीतौ तु न तथा सम्भवः क्वापि क्रियावत्ताप्रतीतौ

शून्यत्वात् न पृथिवी, नीलरूपवत्वाच्च न जलादिकं, तत्प्रत्यक्षे चालोकानिरपेक्षं चक्षुः कारणमिति चेत्।

---

न्तर्भावन्निराकुरुते–तद्धीत्यादिना । तमो हि न पृथिवी गन्धशून्यत्वात्—समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वात् । एवं तमो न जलादिकं नीलरूपवत्त्वात् । तथा च नवसु द्रव्येष्वन्तर्भावासम्भवेन परिशेषानुमानेन तमसो दशमद्रव्यत्वसिद्धिः । तथाचोक्तम्मीमांसकैः" तमः खलु चलं नीलं परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हतीति। ननु तमसो द्रव्यत्वे आलोकनिरपेक्षेण चक्षुरिन्द्रियेण त-

---

तथात्वादर्शनादितिभावः ।

१ गन्धाभावादित्येतदेव तु नोक्तम् । पटगतगन्धप्रतियोगिकाभावमादाय घटे व्यभिचारात् । समवायसम्बन्धावच्छिन्नेत्युक्त्या संयोगसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धाभाववति घटे न व्यभिचारः। अभावश्च प्रतियोगिव्यधिकरणो बोध्यः। प्रतियोगिव्यधिकरणत्वं च स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नप्रतियोगिताकाभाववति निरवच्छिन्नविशेषणतया वृत्तित्वं, तेनोत्पत्तिकालावच्छेदेन विगन्धे घटे न व्यभिचारः। अत्र प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वानिवेशात्सुरभ्यसुरभ्यवयवारब्धे परस्परविरोधान्निर्गन्धे घटे न व्यभिचारः । तत्रोक्तसम्बन्धेन कपालनिष्ठसगन्धसत्त्वेन तत्र गन्धाभावस्य प्रतियोगिव्यधिकरणत्वासम्भवात् ।

२ तमो दशमं द्रव्यम् पृथिव्यादिभिन्नत्वे सति द्रव्यत्वात् इत्येवम्। न च विशेष्यासिद्धिः । रूपादिना तत्साधनात्।

३ परापरयोर्विभागौ विशेषधर्म्मौ परत्वापरत्वरूपौ तद्वत्।

४ प्रसिद्धानि यानि द्रव्याणि पृथिव्यादीनि तेषां वैधर्म्यात्तद्वृत्तिधर्म्मशून्यत्वात्।

न। आवश्यकतेजोऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा। कर्मवत्ताप्रतीतिरप्यालोकापसारणौपाधिकी भ्रान्तिरेव। तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात्। स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते।

---

ग्रहो न स्यात्। द्रव्यग्रहे आलोकसापेक्षचक्षुरिन्द्रियस्य हेतुत्वात्, इत्यत आह—तत्प्रत्यक्षे चेति। तमःप्रत्यक्षे चेत्यर्थः। तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव संयोगसम्बन्धेनालोकत्वेन कारणत्वावधारणादिति भावः। एवं तमसोऽधिकद्रव्यत्वं मीमांसकमतेन प्रसाध्य निराकरोति—नेति। आवश्यकतेजोभावेनेति। प्रकृष्टमहत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावेनेत्यर्थः। अन्धकाराभाव एव तेजः किन्न स्यादिति तु न सम्यक्, उष्णस्पर्शभास्वररूपबुद्धेरनुपपत्तेरिति सूचनायावश्यकपदमुपात्तम्। उपपत्तौ। तमोव्यवहारोपपत्तौ। ननु तमसस्तेजोऽभावरूपत्वे रूपवत्ताप्रतीतिः कथम्, अभावे रूपाभावाद् अत आह—रूपवत्तेति। ननु रूपवत्ताप्रतीतेर्भ्रान्तित्वेऽपि चलतीति प्रतीतिसिद्धकर्म्मवत्त्वहेतुना द्रव्यत्वं सेत्स्यतीत्यत आह—कर्म्मवत्ताप्रतीतिरपीति। न हि द्रव्ये कर्म्मवत्ताप्रतीतिरन्योपाधिकीति भावः। ननु प्रतीतेर्भ्रान्तित्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधज्ञानं, प्रकृते च तमो न चलतीत्युत्तरकाले बाधज्ञानाभावात्कथं प्रतीतेर्भ्रान्तित्वमित्यतो दूषणान्तरमाह—तमस इति। अवयवादीति। आदिनोत्पत्तिध्वंसपरिग्रहः। ननु तमसोऽनतिरिक्तत्वेऽपि सुवर्णस्यातिरिक्तस्य द्रव्यस्य सत्त्वान्नवद्रव्यत्वव्याघातस्तदवस्थ एवेत्यत आह—सुवर्णस्येति। व-

स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

गुणान्विभजते—

अथ गुणा इति। एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः चशब्देन च दर्शिताः। तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते ॥ ३ ॥ ४ ॥ ५ ॥

---

क्ष्यत इति। तेजोनिरूपणावसरे इति शेषः।

इति द्रव्यसामान्यविभागग्रन्थः।

---

कण्ठत इति। रूपरसगन्धस्पर्शाः। संख्यापरिमाणे। पृथक्त्वं संयोगविभागौ, परत्वापरत्वबुद्धयः, सुखदुःखे, इच्छाद्वेषौ, प्रयत्नाश्च गुणा इति विभागसूत्रे सप्तदश कण्ठेनोक्ताः। चशब्देन। सूत्रस्थ चशब्देन गुरुत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाः समुच्चिताः। ते च सर्वे एकतया चतुर्विंशतिगुणा इह व्यवहृताः। ननु चतुर्विंशतौ किन्नाम गुणत्वम्। न तु जातिविशेषः, तत्र प्रमाणाभावादित्यत आह तत्रेति। गुणेष्वित्यर्थः। अग्रे। गुणनिरूपणावसरे। वक्ष्यत इति। द्रव्यकर्म्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वादित्येवमनुमानं गुणत्वजातौ प्रमाणमिति भावः। वक्ष्यत इत्यनेनास्वरससूचकेन गुणत्वजातौ प्रमाणाभावः सूचितः। एतत्तत्त्वं गुणनिरूपणे स्फुटीकरिष्यते ॥५॥

इति गुणसामान्यविभागग्रन्थः।

कर्माणि विभजते—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा।

प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥ ६॥

उत्क्षेपणमिति। कर्मत्वजातिस्तु प्रत्यक्षसिद्धा। एवमुत्क्षेपणत्वादिकमपि॥ ६॥

नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह—

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च।

निर्यग्गमनमप्यत्र गमनादेव लभ्यते॥ ७॥

भ्रमणमित्यादि॥ ७॥

---

प्रत्यक्षसिद्धेति। कर्मकर्मेतिचलनाकारानुगतप्रतीतिसिद्धेत्यर्थः। अधिकतयेति। कर्मविभाजकोपाधिभिर्भ्रमणत्वादिभिरित्यर्थः। मूले गमनादेवेति, गमनं हि यत्किञ्चित्पूर्वदेशविभागपूर्वक उत्तरदेशसंयोगानुकूलो व्यापारः। भ्रमणमपि अनियतदेशसंयोगानुकूलो व्यापारः। रेचनम्मलादेरधोदेशसंयोगानुकूलो व्यापारः। स्यन्दनञ्जलादेर्निम्नदेशसंयोगानुकूलो व्यापारः। ऊर्ध्वज्वलनमग्निज्वालादेरूर्ध्वदेशसंयोगानुकूलो व्यापारः।तिर्यग् गमनञ्च कुटिलगमनमेवेति,सर्वमपि गमनाद्गमनपदादेव लभ्यते प्राप्यते ज्ञायत इति यावत्, अतो नोक्तमिति भावः। एवमुत्क्षेपणमपि लोष्टादेरूर्ध्वदेशसंयोगानुकूलव्यापारानुकूलो

---

१ संयोगानुकूलव्यापार एव हि गमनं देशान्तरस्योपलक्षणत्वात्।

२ गतिप्राप्त्योरनर्थान्तरत्वेन गत्यर्थानामिव प्राप्त्यर्थानां ज्ञानार्थत्वमविरुद्धमिति बोध्यम्।

३ गमनलक्षणेऽनुकूलत्वं जनकप्रयोजकसाधारणमिति लोष्टा-

सामान्यं निरूपयति—

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

सामान्यमिति। तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्य-

---

व्यापारः। एवमपक्षेपेणमधोदेशसंयोगानुकूलव्यापारानुकूलो व्यापारः। आकुञ्चनञ्चादेः शरीरसन्निकृष्टदेशसंयोगानुकूलव्यापारानुकूलो व्यापार इति। एतेषाङ्गमनेऽन्तर्भावाद्गमनादेव लाभे उत्क्षेपणत्वादिभिरपि विभागोऽनुचित इति चेन्न, स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति सर्वमनवद्यम्।

इति कर्मसामान्यविभागग्रन्थः।

---

द्रव्यगुणकर्मणान्द्रव्यत्वादिजातिघटितलक्षणं सम्भवतीत्यभिसन्धाय विशिष्य सामान्यस्य लक्षणं वक्तुमुपक्रमते। तल्लक्षण-

---

दिनिष्ठगत्यनुकूलव्यापारस्य पुरुषनिष्ठस्योदादिपूर्वकक्षिपादिधात्वर्थत्वेऽपि न क्षतिः। संयोगानुकूलव्यापारानुकूलव्यारस्यापि संयोगानुकूलत्वात्।

१ नियोगपर्यनुयोगौ प्रश्ननिन्दे।

२ द्रव्यत्वजातिमत्त्वं द्रव्यत्वम्, गुणत्वजातिमत्त्वं गुणत्वम्, कर्मत्वजातिमत्त्वं कर्मत्वमित्येवम्।

३ अभिसन्धिर्गूढोऽभिप्रायः।

४ विशेषरूपेण, कण्ठतः द्रव्यादिलक्षणमनुक्त्वापि सामान्यस्य लक्षणकथनन्तदावेदकमिति भावः।

५ सामान्ये हि नास्ति जातिरित्यनुपदं मूल एव स्फुटीभविष्यति।

६ सामान्यलक्षणन्त्वित्यर्थः।

क्ष्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति स-
न्त्वेति । लक्षणं हि असाधारणो धर्म्मः । तन्मात्रवृत्तिरसा-
धारणः । तद्वृत्तित्वे सति तदितरावृत्तित्वं तन्मात्रवृत्तित्व-
म् । अयञ्चाव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयरहित एव भव-
तीत्येतद्दोषत्रयरहितो धर्म्मो लक्षणमित्यपि लक्षणलक्षणं क्वचिद्
दृश्यते । तत्राव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् । लक्ष्यतावच्छेदक-
समानाधिकरणात्यन्ताभावप्रतियोगित्वमिति तदर्थः । यथा गोः
कपिलत्वलक्षणे, तद्धि शबलेऽव्याप्तम् । अतिव्याप्तिर्नाम ल-
क्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । लक्ष्यतावच्छेदकसामानाधिक-
रण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामाना-
धिकरण्यमिति तदर्थः । यथा गोः शृङ्गित्वलक्षणे, तद्धि महिषे-
ऽतिव्याप्तम् । असम्भवो नाम लक्ष्यमात्रावर्त्तनम् । लक्ष्यताव-

---

१ तद-(लक्ष्यतावच्छेदका-) ऽधिकरणयावद्वृत्तित्वे सति, तद्-(लक्ष्यतावच्छेदका-) ऽनधिकरणावृत्तित्वमिति । तेनाव्याप्ते गोः शाबलेयत्वादौ नातिव्याप्तिः ।

२ उक्तदूषणाभावत्रयविशिष्टः । एषाञ्च क्रमेण भागासिद्धि-व्यभिचार-स्वरूपासिद्धिरूपहेत्वाभासेषु-अन्तर्भावादितरभेदानु*मितिप्रतिबन्धकत्वेन दोषत्वमूह्यम् । अनुमितिप्रकारश्चानुपदं स्फुटीभविष्यति । आत्माश्रयान्योन्याश्रयादयो लक्षणदोषाः सम्भवन्तोऽप्यन्यत्र (भाषापरिच्छेदव्याख्यादौ) प्रपञ्चितत्वादिह विस्तरभिया नोक्ताः ।

३ लक्षणतावच्छेदकत्वाभिमतसम्बन्धेन कि×ञ्चिल्लक्ष्यावृत्तित्वमिति परमार्थः । एवमुत्तरत्राप्यूह्यम् ।

४ नचात्रालक्ष्यवृत्तित्वरूपातिव्याप्तेरपि सत्त्वात्सङ्कर इति वाच्यम् । दुष्टसङ्करेऽपि दोषासङ्करात् ।

---

* अनुमितिपदमनुमितितत्कारणान्यतरपरम् ।

× अत्र किञ्चित्पदमहिम्ना ऽन्यत्र लक्ष्ये वृत्तित्वमपीति प्रतीयते । तेनासम्भवे नातिव्याप्तिः ।

मवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेके-
ति। नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्य-
स्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्त-

---

च्छेदकव्यापकीभूताभावप्रतियोगित्वमिति तदर्थः। यथा गोरे-
कशफत्वलक्षणे। लक्षणप्रयोजनन्तु व्यावृत्तेः (इतरभेदस्य)
व्यवहारस्य वा सिद्धिः। तथाचोक्तम्[1]। व्यावृत्तिर्व्यवहारो वा
लक्षणस्य प्रयोजनमिति। यथात्र सामान्यम्, इतरेभ्यो[2] भिद्यते,
सामान्यमिति व्यवहारविषयो[3] वा नित्यत्वे सत्यनेकसमवेत
त्वाद् यन्नैवन्तन्नैवं यथा द्रव्यमिति। एवं लक्षणान्तरेऽप्यूह्यम्।
नित्यत्वञ्च ध्वंसाप्रतियोगित्वम्। नच ध्वंससाधारणं, भावत्वे
सतीति विशेषणात्। अनेकत्वञ्चैकभिन्नत्वम्। एकत्वावच्छिन्नप्रति-
योगिताकभेदवत्त्वमिति यावत्। नचाप्रसिद्धिः। उभयन्नैकमिति-
प्रतीत्या तत्प्रसिद्धेः। वस्तुतस्तु स्वप्रतियोगिसमवेतत्वस्वाधि-
करणसमवेतत्वोभयसम्बन्धेन भेदविशिष्टत्वस्यैवानेकसमवेतत्वा-
न्न काप्यनुपपत्तिः। समवेतत्वञ्च समवायसम्बन्धेन वृत्तित्वम्[4]।
सत्यन्तविशेषणस्य कृत्यमाह—अनेकेति। जलपरमाणुरूपादाव-
तिव्याप्तिवारणाय विशेष्यदलम्। उक्तसमवेतत्वलक्षणघटकस-
मवायरूपसम्बन्धविशेषनिवेशप्रयोजनन्दर्शयितुमाह—नित्यत्वे स-
त्यनेकवृत्तित्वमित्यादि। नित्यसंयोगस्त्वेतन्नये नास्त्येवेति
न तत्राव्याप्तिशङ्कापि। यैश्चासौऽभ्युपगम्यते तैर्नित्यविभागो
ऽप्यभ्युपगन्तव्यः स्यात्तुल्ययुक्तेः। तथाच संयोगनाशको गुणो
विभाग इति तदभ्युपगतलक्षणव्याकोपः। नन्वाकाशत्वजा-

---

१ अभियुक्तैरिति शेषः।　　२ द्रव्यादिभ्यः।
३ व्यवहारस्तद्बोधकशब्दप्रयोगः।
४ समवायसम्बन्धावच्छिन्न–वृत्तिता– (आधेयता–) वत्त्वम्।

म् । एकव्यक्तिमात्रवृत्तिस्तु न जातिः । तथा चोक्त-
म्—'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रू-

---

तावव्याप्तिस्तस्या अनेकसमवेतत्वाभावादित्याशङ्क्यालक्ष्यत्वे-
नोत्तरयति—एकव्यक्तिमात्रवृत्तिस्त्विति । एकव्यक्तिमात्रवृत्ति-
त्वञ्च व्यक्त्यन्तरावृत्तित्वम् । व्यक्त्यभेदरूपबाधकसत्वादिति
हेतुशेषः । अनुगतप्रतीतेर्जातिकल्पिकाया अभावादिति
भावः । ननु घटत्वं जातिरिति प्रतीतिवदाकाशत्वं जातिरि-
तिप्रतीतिरेव तस्य जातित्वसाधिका भविष्यति, निःसामान्यत्वे
सति विशेषान्यत्वे सति समवेतत्वस्यैव जातिलक्षणत्वात्तस्य चा-
काशत्वेऽपि सत्त्वादतः सम्मतिमाह—तथाचोक्तमिति । द्रव्यकिर-
णावल्यां मैथिलमहामहोपाध्यायोदयनाचार्यैरिति शेषः । सा-
मान्यमिति हि समानानामेकाकारकप्रतीतिविषयाणाम्भावः ।
तथाच बहुवृत्त्येकधर्मस्यैव सामान्यपदप्रतिपाद्यतया सर्वसिद्ध-
त्वादेकव्यक्तौ जातिरनभ्युपेयेति तद्भावः । तत्र व्यक्तेरभेद
इत्यत्र निष्ठत्वं षष्ठ्यर्थः । व्यक्तिराश्रयस्तन्निष्ठोऽभेदश्च तन्नि-
ष्ठजातित्वाभिमतधर्म्मावच्छिन्नप्रतियोगिताकभेदाभावः । तादृ-
शश्च भेदो घटादौ प्रसिद्धः । अयं घट एतस्माद्घटाद्भिन्न इति
प्रतीतेः । न तथा[3] प्रकृते, इति व्यक्तेरभेद एकव्यक्तिकत्वं (स्वप्र-

---

१ नानाधर्म्मिषु एकाकारकप्रतीतेः । अयमर्थः । नानाघटादि-
व्यक्तिषु एकधर्म्मप्रकारकबुध्युपपत्तये हि घटत्वादिजातिः कल्प्य
ते । एकव्यक्तौ तु न तथा प्रत्ययस्तद्व्यक्तित्वमादायाऽप्युपपद्यत इति
तदतिरिक्तजातिकल्पने प्रमाणाभाव इति ।

२ प्रकृतिजन्यबोधे प्रकारो भावः । गवादिपदाज्जातिविशेषवतो
बोधे जातिः प्रकारस्स एव त्वतलादिभावप्रत्ययार्थः । प्रकृते च गु-
णवचनब्राह्मणादिभ्यः कर्म्मणि चेति भावे ष्यञ् ।

३ अयमाकाश एतस्मादाकाशाद्भिन्न इत्येवम् ।

तियोगिवृत्तित्वस्वाश्रयवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वम् ) स्वनिष्ठधर्मस्याकाशत्वादेर्जातित्वे बाधकम् । तथाचोक्तोभयसम्बन्धेन भेदविशिष्टान्यो धर्मो न जातरित्येवम्पर्यवसितम्। तुल्यत्वम्। तुल्यव्यक्तिवृत्तित्वं स्वव्याप्यत्वस्वव्यापकत्वोभयसम्बन्धेन क्लृप्तधर्मविशिष्टधर्मत्वं घटत्वविशिष्टकलशत्वादीनां जातित्वे बाधकम् । सङ्करश्च परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः । स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभयसम्बन्धेन क्लृप्तधर्मविशिष्टधर्मत्वं मूर्त्तत्वविशिष्टभूतत्वादेर्जातित्वे बाधकम् । अनवस्थितिरनवस्था कल्पनाविश्रान्तिविर-

---

१ अन्यूनानतिरिक्ताश्रयकत्वम् । तच्च घटत्वकलशत्वयोरन्यतरस्यास्तीति घटत्वमपि जातिर्न स्यादतः सम्बन्धद्वयेन क्लृप्तधर्मवैशिष्ट्यन्तदर्थमाह स्वेत्यादिना। तथाच घटत्वमनुगतप्रतीत्या क्लृप्तं न तु कलशत्वम्। एवमन्यत्रापि बोध्यम्।

२ पृथिव्यप्तेजोवाय्वाकाशाः पञ्च भूतपदवाच्याः, पृथिव्यप्तेजोवायुमनांसि पञ्च मूर्त्तपदवाच्यानि । तथाच भूतत्वात्यन्ताभावाधिकरणे मनसि मूर्त्तत्वम्, मूर्त्तत्वात्यन्ताभावाधिकरण आकाशे भूतत्वं पृथिव्यादिचतुष्टये चोभयमस्तीति तयोर्लक्षणसमन्वयः । इत्थं च परस्परेत्यादेः स्वाधिकरणवृत्त्यभावप्रतियोगिजातिमन्निष्ठाभावप्रतियोगित्वं स्वस्य जातित्वे बाधकमिति पर्यवसितोऽर्थः । ननु साङ्कर्यस्य जातिबाधकत्वे किम्मानं, नच स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभयसम्बन्धेन यज्जातिविशिष्टजातित्वं यत्र तत्र तज्जाति व्यापकत्वमिति नियमस्य पृथिवीत्वविशिष्टद्रव्यत्वादौ दृष्टस्य भङ्गापत्तिरेव मानमिति वाच्यम् , साङ्कर्यस्थले एकमात्रस्य जातित्वाभ्युपगमेऽपि उक्तनियमभङ्गाभावादतः सम्बन्धद्वयेन क्लृप्तधर्मवैशिष्ट्यन्तदर्थमाह– स्वेत्यादिना । तथाच मूर्त्तत्वं क्रियासमवायिकारणतावच्छेदकतया क्लृप्तं न तु भूतत्वम् ।

३ यद्यपि निखिलजातिष्वेकवैजात्याङ्गीकारेऽपि तद्वैजात्ये न

पहानिरसम्बन्धो जातिबाधकसंग्रहः॥" द्रव्यादीति। परत्वमधिकदेशवृत्तित्वम्। अपरत्वमल्पदेशवृत्ति-

हः साच जातेर्जातिमत्त्वे बाधिका। रूपहानिः, रूपस्य (स्व-रूपस्य) निःसामान्यत्वे सति समवेतत्वरूपस्य स्वतो व्यावर्त्त-कत्वरूपस्य वा हानिर्व्याघातरूपा विशेषस्य जातिमत्त्वे बाधिका। असम्बन्धः प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवाया-भावः समवायाभावयोर्जातिमत्त्वे बाधक इति श्लोकार्थः। अत्रै-कव्यक्तिकत्वादित्यादिग्रन्थः, आचार्यग्रन्तानुवादो मूले कैश्चित्प्र-क्षिप्तः प्रकाशकृद्भिरधृतत्वादित्युपेक्षितो ऽस्माभिरपि। इत्थं सामान्यलक्षणमभिधाय तस्य परापरभेदेन यद्द्वैविध्यमुक्तं मूले

---

वैजात्यान्तरकल्पनासम्भव एकव्यक्तिकत्वात्, तथापि निखिलजाति-ष्वेकं वैजात्यन्तद्वैजात्यतदाश्रयजातिषु पुनर्वैजात्यमेवमग्रेऽपीत्यन-वस्था बोध्या।

१ तथाच जातिबाधकसंग्रह इत्यत्र जातिपदेन तन्त्रावृत्तिन्यायेन जातित्वस्य जातिमत्त्वस्य (जातेः) चेत्युभयार्थकत्वमाश्रीयत इति भावः।

२ स्वतः स्वेन रूपेण व्यावर्त्तकत्वं भेदानुमापकत्वम्। यथा ज-लपरमाणुः पृथिवीपरमाणोर्भिन्नः विशेषादित्येतदनुपदं स्फुटीभ-विष्यति।

३ व्याघातो ऽत्र स्वावृत्तित्वम्।

४ विशेषवृत्तीनां जातित्वे इत्येवं रामरुद्रो व्याख्यत्। तदनर्थ-कमन्यत्र जातिमत्त्वार्थकत्वस्य तन्त्रादिन्यायेनावश्याश्रयणीयत्वात्।

५ समवाये सत्तारूपजातिमत्त्वं कुतो नास्तीत्युक्तौ प्रत्युक्तिरस-म्बन्ध इति। समवायस्यानेकत्वमिति नव्यमते तु समवायत्वं कुतो न जातिरित्युक्तेरपि प्रत्युक्तिरियम्भविष्यति। अत्रानुयोगितापदं सत्तावच्छिष्टोभयवादिसिद्धं यत्समवायानुयोगित्वन्तत्परमेकत्र प्रसिद्ध-स्यैवान्यत्रापादनसम्भवात्। इत्थञ्चात्र समवायपदमसमवेतवृत्ति-जातीतरप्रातियोगिकसमवायपरमिति व्याख्यानं मन्दप्रयोजनम्। अत्र रूपादौ व्यभिचारवाणाय प्रतियोगितानिवेशः। परमाण्वाकाश-

त्वम् । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्ता-
याः परत्वम् । तदपेक्षया चान्यासां जातीनामपर-
त्वम् ॥ ८ ॥

परभिन्ना च या जातिः सैवापरतयोच्यते ।

द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥

व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्ति-
त्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया व्याप्यत्वात्

तयोःस्वरूपं निर्वक्ति—परत्वमित्यादिना । इदमेव हि व्यापक-
त्वम् । व्याप्यत्वञ्चापरत्वमित्यनुपदं स्फुटीभविष्यति । तत्र-
परं किमित्यपेक्षायामाह मूले—द्रव्यादीत्यादि । द्रव्यादीनां
यत्त्रिकं ( त्रित्वसंख्याविशिष्टः समुदायः ) तत्र वृत्तिर्वर्त्तनं य-
स्याः सा सत्ता द्रव्यं सत् गुणः सन्नित्याद्यनुगतप्रतीतिसिद्ध-
जातिः परतयोच्यते परत्वप्रकारकोच्चारणविषयः। एवमग्रेऽपि[3]।
अस्यापरत्वमुपपादयति मु० सकलेत्यादिना ॥ ८ ॥

मूले परभिन्नेत्यर्थतो व्याख्याति मु०—तदपेक्षयेत्यादि।

दौ व्यभिचारवारणायानुयोगितेति. आकाशेहि सत्ताजातिरस्त्येवेति।

१ अस्तीति सत् सतोभावः सत्ता "सदि * ति यतो द्रव्यगु-
णकर्म्मसु सा सत्ता" इति वै० सूत्रम् ।

२ वस्तुतस्तु समवायेन सत्तावच्छिन्नं प्रति तादात्म्येन द्रव्य-
त्वेन कारणतया कार्यतावच्छेदकतया सत्ताजातिसिद्धिर्बोध्या।

३ अपरतयोच्यते। परापरतयोच्यते इत्यनयोः।

* इतिकारेण प्रत्ययव्यवहारयोः प्रकारमुपदिशति। तथाच
द्रव्यादिषु त्रिषु सत्सदिति प्रकारको यतः प्रत्ययः सदिदं सदिद-
मित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता इति तदर्थः।

अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं, तथाच धर्मद्वयसमावेशादुभयमविरुद्धम्।

विशेषं निरूपयति—

अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥

अन्त्य इति। अन्ते अवसाने वर्तत इत्यन्त्यः। यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः। परमाणूनां परस्परं भेदको विशेष एव। स तु स्वत एव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः॥९॥१०॥

---

मूले परापरतयेति। परतया अपरतया चेत्यर्थः॥ ९ ॥

ननु विरुद्धयोः परत्वापरत्वयोः कथमेकत्र स्थितिस्तत्राह मूले व्यापकत्वादित्यादि। एतदेव विवृणोति मु० पृथिवीत्वादीत्यादिना। तथाचापेक्षिकधर्मद्वयसमावेशादुभयमविरूद्धमितिभावः।

इति सामान्यनिरूपणग्रन्थः।

अन्तेऽवसान इति। अर्थात्कल्पनायाः सावयवपदार्थानामवयवभेदाद्भेदकल्पना सम्भवति, निरवयवानाम्परमाणूनान्तु विशेष एव भेदकः। स तु। विशेषस्तु। स्वतः। स्वेन रूपेणैव व्यावृत्तः। भेदानुमितिविषयः। तथाच स्वतो व्यावृत्तत्वं स्वाभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदप्रकारकानुमित्यविषयत्वम्। साजात्यञ्च पदार्थविभाजकोपाधिना द्रव्यत्वादिना बोध्यम्। तेन द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेऽपि न क्षतिः।

---

१ परस्पराकाङ्क्षयोर्विरुद्धयोरप्येकत्र समावेशो जन्यत्वजनकत्वाद्योर्दृष्ट इति तदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्व-तदधिकरण-

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।

तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११॥

घटादीनामिति। अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः सम्बन्धः स समवायः। समवायत्वं नित्यसम्बन्धत्वम्।

तेन। स्वतो व्यावृत्तत्वेन। तत्र। विशेषव्यावृत्तौ ॥ १० ॥

इति विशेषनिरूपणग्रन्थः।

घटादीनामिति मूलस्थादिपदं प्रकारवाचि प्रकारश्च सादृश्यन्तच्चावयवित्वावयवत्वाभ्यामित्याह—मु० अवयवावयविनोरिति । अवयवी च अवयवश्च तयोरजाद्यदन्तामित्यवयवपदस्य पूर्वप्रयोगः । मूले षष्ठ्यर्थः प्रतियोगित्वं सप्तम्यर्थश्चानुयोगित्वम्। तथाच घटाद्यवयविप्रतियोगिकः कपालाद्यवयवानुयोगिकः सम्बन्धः समवायः। एवमग्रेऽपि बोध्यम्। तेषु । द्रव्यगुणकर्मसु । जातेश्चेति चकारेण नित्य-

---

वृत्त्यत्यन्ताभावप्रतियोगित्वरूपयोर्व्यापकत्वव्याप्यत्वयोरपि उक्तदिशा समावेशोऽविरुद्धइतिभावः । तथाचेत्यादिपाठो मुक्तावल्यां क्वचित्पुस्तकेष्वस्ति परं स न प्रकाशादिसम्मतः।

१ अवयवत्वञ्च द्रव्यसमवायिकारणत्वम् । अवयवित्वञ्च तन्निरूपकत्वम्। अन्ये त्वाहुः, विषयित्वसम्बन्धावच्छिन्न*व्यापकत्वमवयवत्वमिति तद्घटकत्वापरपर्यायं ज्ञानविषयमात्रनिष्ठं बोध्यम् ।

---

× यथा भूवादयो धातव(१-३-१)इत्यत्र भूप्रभृतयो वासदृशाः। (क्रियावाचिनः) धातवो भवन्तीति हि तदर्थः।

* यस्मिन् ज्ञाने विषयितासम्बन्धेन रामशब्दो वर्त्तते तत्र ज्ञाने विषयितासम्बन्धेन रेफादेर्वर्णस्याभावो वक्तुमशक्य इति रामशब्दव्यापकत्वाद्रेफादीनामवयवत्वन्तत्र द्रष्टव्यम्। प्रकृते तु द्रव्यनिष्ठावयवत्वस्य निर्विवक्षितत्वादिति हृदयम्।

तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणवि-
शेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्; दण्डी पुरु-
ष इति विशिष्टबुद्धिवदित्यनुमानम्,। एतेन संयोगा-

---

द्रव्येषु विशेषसम्बन्धः समुच्चीयत इत्याह—नित्यद्रव्यवि-
शेषयोश्चेति । उक्तयुक्त्या विशेषनित्यद्रव्ययोरिति वक्तुं यु-
क्तम्। प्रतियोगिनः पूर्वमुपादानौचित्यात्। अल्पाच्तरत्वाच्च ।
समवायस्य लक्षणमाह—नित्यसम्बन्धत्वमिति । नित्यत्वे सति
सम्बन्धत्वमित्यर्थः । सम्बन्धश्चात्र सम्बन्धिभिन्नो ग्राह्यः तेन
नित्याभावादिस्वरूपसम्बन्धे नातिव्याप्तिः । सम्बन्धत्वं संयो-
गादावप्यस्तीत्यतो नित्यत्वे सतीति। यदि च विभुसंयोगो-
नित्य इत्यभ्युपगमः, तदा नित्यसम्बन्धतावच्छेदकधर्म्मवत्त्वं
समवायलक्षणम्बोध्यम् । संयोगत्वं हि न नित्यसम्बन्धता-
वच्छेदको धर्म्मः अनित्यसंयोगेऽपि तत्सत्वात्। ननु समवायस्य
सम्बन्धत्वे किम्मानमित्याशङ्क्याह— तत्र प्रमाणन्त्विति। गुण-
क्रियादीत्यादिना जातिपरिग्रहः। विशिष्टबुद्धिः गुणवान् घटः,
क्रियावान्घटः, जातिमान्घट इत्यादिरूपा। विशेषणविशेष्य-
सम्बन्धविषया । विषयतासम्बन्धेन विशेषण—विशेष्य—सम्ब-
न्धैतत्रितयावगाहिनी । संयोगादिबाधादिति । द्रव्ययोरेव

---

१ विशिष्टबुद्धिनियामकः सम्बन्धः । स च सम्बन्धिभ्यां भिन्नो
द्विष्ठ इति केषाञ्चिन्मतन्तत्त्वभेदादीनां सम्बन्धत्वानापत्याऽत्र न-
ये हेयमेव । ते हि इतरसम्बन्धानवच्छिन्नशुद्धविशेष्यविशेषण-
भावमभेदस्थलेऽभ्युपयन्ति।

२ स्वमते नित्यसंयोगस्यानभ्युपगमात्तुष्यतु दुर्ज्जन इति न्यायेन
पराशङ्कां निराकरोति ।

द्बाधात्समवायसिद्धिः। नच स्वरूपसम्बन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः। नच समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात्। न चैवमभावस्य

---

संयोग इत्यादिनियमादिति भावः। अत्र समवायसम्बन्धेन पटत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन तन्तुत्वेन हेतुत्वात्कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिरित्यपि द्रष्टव्यम्। सिद्धसाधनमिति। अयुतसिद्धयोः स्वरूपसम्बन्ध इति वदतः परस्येति शेषः। अर्थान्तरं वेति। समवायसाधने प्रवृत्तानां नैयायिकानामिति शेषः। ननु तथापि समवायस्यैकत्वे किस्मानमत आह—लाघवादिति। तथाच यथा क्षित्यादिजनकतयेश्वरो लाघवादेक एव सिद्ध्यति तथा समवायोऽपीत्यर्थः। अयम्भावः। परमते अनन्तस्वरूपाणां क्लृप्तत्वेऽपि तत्र सम्बन्धत्वकल्पनं गौरवम्। स्वमते तु एकस्य समवायस्य तत्र सम्बन्धत्वस्य चेतिकल्पनाद्वयमेवेति महल्लाघवमिति। रूपवत्ताबुद्धिप्रसङ्गः। रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इत्यर्थः। स्पर्शसमवायरूपसमवाययोरैक्यादिति भावः। तत्र। वायौ। रूपाभावादिति। सम्बन्धसत्तासम्बन्धिसत्तोभयसत्ताधीनविशिष्टसत्ताया अभ्युपगमात्, प्रकृते च सम्बन्धसत्त्वेऽपिसम्बन्धिसत्त्वाभावादिति भावः। न च रूपसमवायसत्त्वे तेन सम्बन्धेन तत्र कथं रूपाभावः सम्बन्धसत्त्वस्य तेन सम्बन्धे

---

१ एवं समवायसिद्धावपि।

वैशिष्ट्यं सम्बन्धान्तरं सिध्येदिति वाच्यम्, तस्य सम्बन्धिसत्त्वव्याप्यत्वादिति वाच्यम्। रूपनिरूपितत्वविशिष्टसमवायस्यैव रूपसम्बन्धतया वायौ तदभावात्। न च विशिष्टस्य[1] शुद्धानतिरिक्तत्वेन शुद्धसमवायसत्त्वदशायां विशिष्टसमवायोऽपि वायावस्त्येवेति वाच्यम्। रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणताया एव रूपसम्बन्धत्वात्तस्य वायावभावात्[2]। वैशिष्ट्यम्। तन्नामकं सम्बन्धान्तरम्। अतिरिक्तपदार्थतयेति[3] शेषः। सिद्ध्येदित्यस्य भूतलादावित्यादिः। यदि वैशिष्ट्यमतिरिक्तं स्वीक्रियते तदा तन्नित्यमनित्यं वेति

१ गुणकर्मान्यत्वविशिष्टसत्ताया: शुद्धसत्तानतिरेकिताया मूल एव वक्ष्यमाणत्वात्।

२ ननु तादृशाधिकरणत्वे (रूपवान्वायुरिति प्रतीतौ) प्रयोजकं समवाये वाय्वनुयोगिकत्वं रूपप्रतियोगित्वञ्च तत्स्पर्शप्रतियोगिकसमवाये स्पर्शवान्वायुरितिप्रतीतावस्त्येव, एवं रूपवान्घट इति प्रतीतौ समवाये रूपप्रतियोगिकत्वमप्यस्ति, समवायश्च एक एवेति कथन्न रूपवान्वायुरिति प्रतीतिरिति चेन्न। वाय्वनुयोगिकत्वावच्छेदेन रूपप्रतियोगिकत्वस्याभानात्। प्रतीतिबलादे * वावच्छेद्यावच्छेदककल्पनस्य शिष्टसम्मतत्वात्। नव्यास्तु पृथिव्यां गन्धस्य समवायो न जल इत्यादिप्रतीत्या समवायस्य नानात्वमेवेच्छन्ति। तन्मते समवायस्य स्वरूपसम्बन्धत्वेन न क्षतिः, वायौ रूपसमवायानङ्गीकारादिति बोध्यम्।

३ मूले सम्बन्धान्तरपदस्य संयोगसमवायातिरिक्तार्थकत्वे इष्टापत्तिरेव स्वरूपस्यैव तत्सम्बन्धत्वोपगमादतः शेषं पूरयति अतिरिक्तपदार्थतयेति।

४ घटवत्ताज्ञानदशायां घटवत्यपि भूतले भ्रमरूपा घटाभाववत्ता बुद्धिर्जायत एवेति न तदापत्तिः सम्भवतीत्यतस्तस्याः प्रमात्वमापादयति।

* एकप्रतीतिनिरूपितविषयतयोरेवावच्छेद्यावच्छेदकभाव इति न्यायविदाम्मतम्।

नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धि-प्रसङ्गात् । घटाभावस्य तत्र सत्त्वात् । तस्य च नित्यत्वात् । अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात् । वैशिष्टयस्य तत्र सत्त्वात् । मम तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव

विकल्प्य आद्ये दूषणमाह– तस्येति । वैशिष्ट्यस्येत्यर्थः । घटाभावबुद्धिप्रसङ्गादिति । घटाभावबुद्धेः प्रमात्वप्रसङ्गादित्यर्थः । ननु वैशिष्ट्यस्य तत्र सत्त्वेऽपि घटानयनदशायां तत्र घटाभावाभावादेव न घटाभावबुद्धिरत आह– घटाभावस्येति । तत्र । घटवति भूतले । न च प्रतियोगिना तन्नाश इति वक्तुं शक्यत इत्याह–तस्य चेति । अभावस्य चेत्यर्थः । अन्यथा । घटाभावस्यानित्यत्वे । देशान्तरेऽपि । घटशून्यदेशेऽपि । घटत्वावच्छिन्नाभावस्यैकत्वादिति भावः । वैशिष्ट्यस्येति । वैशिष्ट्यस्य नित्यत्वाभ्युपगमपक्ष इत्यादिः । तत्र । घटानयनेन घटवति । नन्वेवं समवायैकत्ववादिनस्तवापि मते आमश्यामरूप–घटस्य पाकेन रक्ततादशायां तत्र श्यामरूपसमवायस्य सत्त्वात् श्यामरूपवत्ताधीप्रसङ्ग इत्यत आह– ममत्विति । द्वितीये दूषणमाह वैशिष्ट्यस्येति । ननु वैशिष्ट्यस्यानङ्गीकारे घटाभावभूतलयोः कः सम्बन्धः, स्वरूपमिति चेत्तथा सति घटशून्यतादशायामिव घटवत्तादशायामपि भूतले घटाभावबुद्धिस्तव मतेऽपि स्यात् घटाभावभूतलयोस्तत्स्वरूपसम्बन्धस्य च तत्र सत्त्वादत आह–

---

१ अत्यन्ताभावादेः प्रतियोगिना, अन्योऽन्याभावस्य च प्रतियोगितावच्छेदकेन सह विरोधात् ।

२ आमोऽपरिपक्वः "कच्चेति" प्रसिद्धः ।

गौरवम्। इत्थं च तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः ॥ ११ ॥

अभावं विभजते—

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।

अभावास्त्विति। अभावत्वं द्रव्यादिषट्कान्यो-

एवश्चेति । तत्तत्कालीनमिति । घटाभाववद्भूतलमिति ज्ञानकालिकमित्यर्थः। तत्तद्भूतलादिकमिति। यत्र यत्र भूतले घटाभावबुद्धिस्तत्तद्भूतलादिकमित्यर्थः । तत्तदभावानामिति । यस्य यस्याभावस्य बुद्धिस्तस्य तस्येत्यर्थः । तथाच न स्वरूपमात्रं सम्बन्धः किन्तु ईदृशः स्वरूपविशेष इति न पूर्वोक्तातिप्रसङ्ग इति भावः ॥ ११ ॥

द्रव्यादिषट्कान्योन्याभाववत्त्वमिति । षट्संख्या प्रमाणमस्येति षट्कः । "संख्याया अतिशदन्तायाः कन्" इति प्रमाणेऽर्थे कन् । स चासावन्योन्याभावश्चेति कर्म्मधारयं कृत्वा द्रव्यादीनां षट्काऽन्योन्याभाव इति षष्ठीतत्पुरुषस्ततोऽस्त्यर्थे मतुवन्ताद्भावे त्वः । तथाच द्रव्यादिप्रतियोगिको यः षट्संख्यापरिमितोऽन्योऽन्याभावः द्रव्यं न गुणो न कर्म नेत्यादिरूपस्तद्वत्त्वं लक्षणार्थस्तेन द्रव्यादिगतषट्त्वावच्छिन्नप्रतियोगिताकाभावस्य प्रत्येकवृत्तित्वमादाय द्रव्यादावेवातिप्रसङ्ग एकसत्त्वेऽपि द्वयन्नास्तीति प्रतीतेरिति शङ्काऽपास्ता । अभावत्वमखण्डोपाधिरनुयोगिताविशेषो वेति

---

१ संसर्गानुयोगिताव्यावर्त्तनाय विशेषपदम्।

न्याभाववत्त्वम्। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते—प्रागभाव इति। संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं

केचित्। अन्यथाऽन्योन्याभावत्वस्याभावत्वगर्भस्याग्रे वक्तव्यतयाऽभावत्वस्यान्योन्याभावत्वगर्भत्वेऽन्योऽन्याश्रयापत्तिर्भवति। वस्तुतस्तु नञ्पदजन्यप्रतीतिविषयत्वं, प्रतियोगिसापेक्षप्रतीतिविषयत्वं वाऽभावत्वम्। अतो नापत्तिलेशोऽपीति ध्येयम्। मूले संसर्गाऽन्योन्याभावभेदत इत्युक्त्यैकः संसर्गाख्योऽपरोऽन्योन्याभाव इत्यापाततः प्रतीयते तच्चायुक्तं, संसर्गस्याभावत्वानङ्गीकारादित्यत आह—संसर्गाभावेति। तथाच द्वन्द्वात्परं श्रूयमाणस्याभावपदस्य प्रत्येकमभिसम्बन्धो भवति द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात्। क्रमेण द्वयोरभावयोर्लक्षणमाह—संसर्गाभावत्वमिति। अन्योऽन्याभावेऽतिव्याप्तिवारणाय भिन्नान्तम्। घटादावतिव्याप्तिवारणायाभावपदम्। एवमग्रेऽपि। अत्र भेदसंसर्गावच्छिन्नप्रतियोगिताकत्वं संसर्गाभावत्वमिति केचित्। तन्न। प्रागभावध्वं-

१ मूलोक्तरीत्या *लक्षणाभ्युपगमे।

२ तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वमात्रस्यान्योन्याभावलक्षणत्वे घटत्वादौ घटत्वाभाववद्भेदरूपेऽतिव्याप्तिवारणायाभावत्वानिवेशस्यावश्यकत्वादिति भावः।

३ प्रागभावस्य ध्वंसस्य च नञ्पदजन्यप्रतीतिविषयत्वं केषाञ्चिन्मते नास्त्यतोलक्षणान्तरानुसरणम्। नव्यास्तु प्रागभावस्य प्रतियोगिसापेक्षत्वेऽपि नास्ति मानमिति तस्य पदार्थान्तरत्वेऽप्यभावत्वं नास्त्येवेत्याहुः।

* एतेन भावभिन्नत्वमभावत्वमित्यपि निरस्तम्।

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्। नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वम्। यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य सम्बन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेपि न घटकाले घटात्यन्ताभावबुद्धिः । तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्।

---

सयोः संसर्गावच्छिन्नप्रतियोगिताकत्वे मानाभावात् । तादात्म्येति । अभेदस्तादात्म्यम् तेन अवच्छिन्ना प्रतियोगिता यस्य सः । प्रथमान्तद्वयमध्यपतितनञ्पदजन्यप्रतीतिविषयः सः। प्रथमान्तयोरभेदान्वयनियमात् । प्रागभावस्य लक्षणमाह—विनाश्यभावत्वमिति । ध्वंसेऽतिव्याप्तिवारणाय विनाशीति। अयञ्च प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीतिव्यवहारहेतुः । अयञ्च सान्तोऽप्यनादिरेवेति ध्येयम्। ध्वंसस्य लक्षणमाह—जन्याभावत्वमिति। प्रागभावेऽतिव्याप्तिवारणाय जन्येति । अयञ्च प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः ध्वस्तव्यवहारहेतुः । अत्यन्ताभावस्य लक्षणमाह—नित्येति। ध्वंसवारणाय नित्यपदम्। नन्वत्यन्ताभावस्य नित्यत्वे घटानयनानन्तरमपि भूतले घटोनास्तीतिप्रतीत्यापत्तिरित्यत आह—यत्रत्विति। तथाच सम्बन्धाभावादेव घटानय-

---

१ विरुद्धविभक्तिरहितनिपातातिरिक्तनामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति नियममनुसृत्येदमभिहितम् । नञोऽसमभिव्याहारे यः प्रकारतावच्छेदकस्स एव नसञ्मभिव्याहारे प्रतियोगितावच्छेदक इत्युच्यते। यो धर्म्मो यस्य अवच्छेदकः स तद्धर्म्मावच्छिन्नेत्यावेदितम्प्रागेव।

अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतं, श्यामघटे रक्तो नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावम् । नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत एवेति प्राहुः । नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेत् । न । अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं च

---

नानन्तरं घटात्यन्ताभावबुद्धिर्नेति भावः । केचिदिति । अत्रास्वरसबीजन्तु कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमादेव घटवति घटो नास्तीतिप्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावाभ्युपगमे लाघवाभाव इति । ननु मास्तु घटकाले घटात्यन्ताभावबुद्धिः घटोत्पत्तेः प्राक्काले तु स्यादित्याशङ्क्याह– अत्रेत्यादिना । ननु तर्हि रक्तरूपप्रागभावाधिकरणे श्यामघटे श्यामरूपध्वंसाधिकरणे च रक्तघटे कथं रक्तो नास्ति,श्यामो नास्तीति प्रतीतिः । ध्वंसप्रागभावयोरत्यन्ताभावस्यासत्त्वादित्यत आह– श्यामघटे इति । तत्रेति । ध्वंसप्रागभावयोरित्यर्थः । अत्यन्ताभावेन सहेति शेषः । तथाच नव्यमते पूर्वपक्षिकथितशङ्कायामिष्टापत्तिरेवेति भावः । नन्वभावस्तु द्विधेत्यादिनाऽभावविभागोऽनुपपन्नः, अभाव एव मानाभावादित्यभिप्रेत्य प्राभाकरः शङ्कते–नन्विति । अभावस्याधिकरणात्मकत्वे गौरवमुद्भावयन्परिहरति—अनन्तेति । अतिरिक्तेति । भावातिरिक्तेत्यर्थः । किञ्च अभावस्याधिकरणात्मकत्वे ऽभेदे आधाराधेयभावानुपपत्त्या पुष्पे गन्धाभाव इति प्रतीत्यनुपपत्तिर्दोषः, सोऽप्यत्र मते नेत्याह–एवञ्चेति । अधिकरणापेक्षयाऽतिरिक्तत्वे चेत्यर्थः ।

आधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तादिन्द्रियाग्राह्यत्वादप्रत्यक्षत्वं स्यात्। एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः ॥

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥

---

ननु भवन्मतेऽपि अभावाधिकरणकाभावस्याधिकरणात्मकत्वमस्त्येव तथाच तत्र यथाऽधाराधेयभावोपपत्तिस्तथा सर्वत्राप्यस्तु को दोष इत्यतो दूषणान्तरमाह—एवञ्चेति। अन्यथा । अभावस्याधिकरणात्मकत्वे । प्रत्यक्षत्वं न स्यादिति । ग्राह्यविषयप्रत्यक्ष एवेन्द्रियाणां सामर्थ्यावधारणात् । अत एव चक्षुषा स्वसंयुक्तसमवायसन्निकर्षसत्त्वेऽपि न गन्धप्रत्यक्षन्तत्र तस्यायोग्यत्वात् । प्रकृते च येनेन्द्रियेण यद् गृह्यते तेनेन्द्रियेण तन्निष्ठा जाति स्तदभावश्च गृह्यत इति नियमाच्छ्रोत्रेण शब्दग्रहणे तेनैव तदभावस्य ग्रहो युक्तः । अधिकरणरूपत्वे तु तद्ग्रहणे तस्यासामर्थ्यादग्रह एव स्यादिति भावः । एतेन । उक्तदिशाऽप्रत्यक्षत्वापत्तिरूपवक्ष्यमाणदूषणेन । इत्यभावविभागग्रन्थः ॥ १२ ॥

इति प्रकाशानुगतायामभिनवप्रभाख्यायां न्यायसिद्धान्तमुक्तावलीव्याख्यायाम्पदार्थसामान्यविभागनिरूपणन्नाम प्रथमः परिच्छेदः ॥ * ॥

परस्परधर्मतापन्नानां सप्तपदार्थानामेव परस्परभेदकत्वं ज्ञापयितुमाह—इदानीमिति। पदार्थनिरूपणानन्तरमित्यर्थः । तद-

---

१ मूले साधर्म्यवैधर्म्यनिरूपणयोः प्रयोजनस्यानुक्तत्वात्तत्प्रदर्शयितुमवतारयति ।

सप्तानामिति । समानो धर्मो येषां ते सधर्माणः, तेषां भावः साधर्म्यं, समानो धर्म इति फलितोऽर्थः। एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितोऽर्थः । ज्ञेयत्वं ज्ञानविषयता, सा च सर्वत्रैवास्ति। ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्वादिकं बोध्यम् ॥ १३ ॥

---

निरूपणे तत्तत्पदार्थघटितस्य तत्तत्पदार्थस्य साधर्म्यतया निरूपणासम्भवादिति भावः। समानो धर्मः सधर्मः । समानस्य छन्दसीतिसूत्रे समानस्येति योगविभागात्सः, तस्य भावः साधर्म्यमेवं वैधर्म्यमित्यत्रापि इति भ्रमवारणाय बहुव्रीहिमाह समानो धर्मो येषामिति । यद्यपि अन्यपदार्थापेक्षबहुव्रीहितः समस्यमानोभयपदार्थापेक्षकर्मधारयस्य निषादस्थपत्यधिकरणन्यायेन झटित्युपस्थितिमूलकान्तरङ्गत्वलक्षणं प्राबल्यमस्ति तथापि नानार्थे तात्पर्याद्विशेषावगतिरिति न्यायेन तथार्थकथनेऽपि न क्षतिरिति ध्येयम्। फलितोऽर्थ इति । प्रकृतिजन्यबोधे प्रकारो हि भावः । समानधर्म्मवति च समानधर्म्म एव प्रकार इति भावः। केवलान्वयित्वादिति । विषयभेदेन

---

१ निषादस्थपतिं याजयेदिति हि वेदवाक्यम् अत्र संशयो भवति कर्मधारयो वा षष्ठीतत्पुरुषो वा षष्ठ्यर्थबहुव्रीहिर्वेति तत्र त्वेषनिर्णयः पदद्वयेन कर्मधारयोपस्थितार्थ एव लाघवाच्छक्तिग्रहः कल्प्यः। पश्चाच्च निषादस्य सङ्करजातेर्याजनोपयोगिमन्त्राध्यापनकल्पनेऽपि न क्षतिः। फलमुखगौरवस्यादोषत्वादिति।

२ यः प्रकारः स एव विशेषणमित्युच्यते, इत्युपरिष्टान्मूल एव स्फुटीकृतमस्ति।

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।

सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥

द्रव्येति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावे-

---

विषयताया भेदेऽपि ज्ञानविषयतात्वेन केवलान्वयित्वमस्त्येवेति भावः । एवमग्रेऽपि । ज्ञेयत्वादीत्यत्रादिपदार्थं दर्शयति—एवमभिधेयत्वेति। अभिधातुं योग्योऽभिधेयः, अभिपूर्वकाद्धाञः कर्मणि अचोयत् । अभिधासङ्केत इत्यनर्थान्तरं सङ्केतश्चेच्छैव, आत्मविशेषगुणज्ञानाद्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययार्थो विषयत्वं विषयित्वं वेत्यभिधाविषयत्वमभिधेयत्वमिति फलितम् । एवम्प्रमाविषयत्वं प्रमेयत्वं प्रमा च यथार्थानुभवः । प्रमेयत्वादिकमित्यादिनास्तित्वपरिग्रहः । अस्तित्वञ्च कालसम्बन्धित्वम् ॥ १३ ॥

द्रव्यादीनां षण्णां साधर्म्यन्न किञ्चिदस्तीति स्फुटयँस्तदुपेक्ष्य द्रव्यादीनाम्पञ्चानां साधर्म्यं मूले प्रपाञ्चितं द्रव्यादय इत्यादिना। अनेकत्वे सति भावत्वमिति । एवञ्च मूले द्रव्यादयः पञ्चेत्युद्देश्यपदं भावा अनेके इति विधेयपदमिति बोध्यम् । एकै-

---

१ नहि वृत्तिमदभावाप्रतियोगित्वं केवलान्वयित्वं केवलान्वयिनोऽपि द्वित्वादिनाऽभावसत्त्वात् किन्तु वृत्तिमदभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वमेव तथा, एवञ्च घटादिनिष्ठविषयताव्यक्तेरपि ज्ञानविषयतात्वमादाय केवलान्वयित्वमक्षतमेवेति भावः ।

२ षड्भावपदार्थानां मूले साधर्म्यानुक्त्या तत्र न्यूनतां परिजिहीर्षन्नाह ।

३ उद्देश्यत्वञ्च पूर्वज्ञानविषतया पूर्वोपात्तत्वम् यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यप्येतत्परमेव ।

४ अपूर्वज्ञानविषयत्वञ्च विधेयत्वम् ॥

स्व वाप्यत्वे सति स्वव्याप्याव्याप्यत्वात्
विभाजकत्वम्



ऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम्। तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः। तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। संमवायित्वं च समवायसंबन्धेन सं-

कस्मिन् घटादावाकाशादौ चाव्याप्तिमुद्दिधीर्षया भावा अनेके इति मूलस्य अनेकत्वे सति भावत्वमित्येतावन्मात्रं नार्थोऽपितु अनेकभाववृत्तिपदार्थविभाजकोपाधिमन्त इत्येतद्बुबोधयिषया पूर्वपरिष्कृतलक्षणस्य फलितार्थमाह—तथाचेत्यादिना, एवमग्रेऽप्यनुसन्धेयम्। अनेकभाववृत्तिधर्मवत्त्वमात्रोक्तौ तु भावत्वमादाय समवायेऽतिव्याप्तिः स्यादतः पदार्थविभाजकोपाधीति स च पदार्थत्वसाक्षाद्व्याप्यो धर्म्मः साक्षाद्व्याप्यत्वञ्च स्वव्याप्यत्वे सति स्वव्याप्याव्याप्यत्वम् स्वम्पदार्थत्वम्। उपाधिमत्ता च स्वरूपसमवायान्यतरसम्बन्धेन तेन कालिकस-

१ समवायिन इत्यत्रापि। समवायो ऽस्त्येषामिति विग्रहेऽतइनिठनाविति इन् प्रत्ययः। न तु समवायोस्त्येष्विति। तथा च समवायप्रतियोगित्वमिति तदर्थः। एवमपि नित्यद्रव्येष्वव्याप्तिरिति तत्रापि समवेतवृत्तियदार्थविभाजकोपाधिमत्त्वमिति तदर्थः। तेन नित्यद्रव्येषु ( परमाण्वाकाशादिषु ) नाव्याप्तिः। इति तात्पर्यम्।

२ अनेकभाववृत्तित्वञ्च स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वन्तेन गुणादौ संख्यारूपस्यानेकत्वस्याभावेऽपि नाव्याप्तिः। गुणत्वादौ परिष्कृतानेकभाववृत्तित्वसत्वात्तदादाय लक्षणसमन्वयात्। अभावत्वेवारणाय भाववृत्तित्वमिति। समवायत्ववाणाय च सत्यन्तनिवेशः। सत्यन्ते उभयसम्बन्धनिवेशोऽपि तद्वारणायैवेति बोध्यम्।

३ पदार्थविभाजकोपाधिश्च।

४ कालिकसम्बन्धेन ध्वंसस्य तादृशोपाधिमत्त्वात्। समवायेनोपाधिमत्त्वविवक्षणे तु सामान्यादावव्याप्तिः स्यादतस्तन्नोक्तम्।

बन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात्। सत्तावन्त इति। द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः। गुणादिरिति। यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घम्बन्धमादाय ध्वंसे नातिव्याप्तिः। अत्र समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यादिचतुर्णां साधर्म्यं बोध्यम्। ननु सत्तावन्तस्त्रयस्त्वाद्या इत्यत्र आद्यत्रयमुद्दिश्य सत्तावत्त्वं विधीयते तच्चोयुक्तमुद्देश्यसमर्पकपदस्य पूर्वमेवोपादातुमुचितत्वादत एव पर्वतो वह्निमानितिवद्वह्निमान्पर्वत इत्येवं न प्रतिजानते शिष्टाः। अतो योजनया तदर्थमाह—द्रव्यगुणकर्मणामिति। तथाच शब्दक्रमादर्थक्रमो बलीयानिति नोक्तशङ्कावसरः। अत्र च नित्यानित्यसमवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यगुणयोः साधर्म्यम्बोध्यम्। द्रव्यमात्रस्य तु साधर्म्यं मूलकृतैव ( २४ का० ) वक्ष्यते। निर्गुणक्रिय इति मूलन्तदर्थश्च गुणश्च क्रिया च गुणक्रिये ते निर्गते यस्मात्सः। निर्गुणः निष्क्रियश्चेति इत्थश्च निर्गुणत्वं निष्क्रियत्वश्च साधर्म्यमुक्तम्भवति, समुदितमर्थमनुसृत्याह—गुणक्रियाशून्यत्वमिति। गुणक्रियात्यन्ताभाववत्त्वमित्यर्थः। तेन गुणक्रिययोरन्योऽन्याभावमादाय द्रव्ये नातिव्याप्तिः। आद्यक्षणे घटादावतिव्याप्तमिति। उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठतीति निर्गुण एव गुणोत्पत्तिरिति राद्धान्तमनुसृत्येदम्बोध्यम्। निर्गुणत्वम्परि-

१ यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति शिष्टैरभिधानात्। २ गुणशून्यत्वम्। ३ क्रियाशून्यत्वम्।

४ समवायसम्बन्धेन गुणोत्पत्तिं प्रति तादात्म्यसम्बन्धेन द्रव्यस्य कारणत्वोपगमादयन्नियमो लभ्यते।

५ तथाच चाक्षुषप्रत्यक्षे रूपस्य कारणत्वाद् घटादेश्चाक्षुषमपि तृतीयक्षण एवेति ध्येयम्।

टादावतिव्याप्तं, क्रियाशून्यत्वं च गगनादावतिव्याप्तं, तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः। नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति, कर्मवदवृत्ति वा किन्तु गुणत्वादिकं तथा। आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः॥१४॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५॥

सामान्येति। सामान्यानधिकरणत्वं सामान्या-

ष्करोति गुणवदवृत्तिधर्मवत्त्वमिति । अत्र गुणवत्ता समवायसम्बन्धेन बोध्या। तेन गुणत्वादेः कालिकसम्बन्धेन गुणवति गुणादौ वृत्तेस्तदादाय कथं लक्षणसमन्वय इति शङ्काऽपास्ता, एवमवृत्तित्वं धर्मवत्त्वञ्च स्वरूपसमवायान्यतरसम्बन्धेन बोध्यम् । स्वरूपमात्रेण विवक्षणे गुणकर्मणोरव्याप्तिः । समवायमात्रेण विवक्षणे सामान्यादावव्याप्तिः। आद्ये समवायेनान्त्ये स्वरूपेण विवक्षणे द्रव्यत्वप्रकारकप्रमाविशेष्यत्वमादाय द्रव्येऽतिव्याप्तिः । आद्ये स्वरूपेणान्ते समवायेन विवक्षणे सामान्यादावव्याप्तिरेवेति ध्येयम् । निष्क्रियत्वम्परिष्करोति–कर्मवदवृत्तीति । कर्मवदवृत्तिधर्मवत्त्वमित्येतावदुक्तावाकाशत्वमादायाकाशेऽतिव्याप्तिरतः पदार्थविभाजकोपाधीत्याह–आकाशत्वादिकन्त्विति । अत्र यद्वेत्यादिकः प्रक्षिप्तपाठोऽसारबहुल इत्युपेक्षितः ॥ १४ ॥

जात्यादीनामप्येकार्थसमवायेन सामान्यवत्त्वात्सामान्यपरिहीना इति मूलमयुक्तमतोऽव्याचष्टे–सामान्यानधिकरणत्वमिति । तथाच समवायसम्बन्धावच्छिन्नप्रतियोगिताकसामान्या-

दीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत्, तच्च न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रस-

भावचत्त्वन्तरत्वम् । अप्रसिद्धत्वात्पारिमाण्डल्यपदार्थं निर्वक्ति पारिमाण्डल्यमिति । इत्थश्च पृषोदरादिरयम्[1] । तद्भिन्नानां पारिमाण्डल्यभिन्नानाम् । ननु द्व्यणुकपरिमाणस्य कारणत्वाभावात्तत्रातिव्याप्तिरतः पारिमाण्डल्यपदं द्व्यणुकपरिमाणस्याप्युपलक्षणम् । तेन तस्यापि लक्ष्यत्वमित्याभिप्रेत्याह—अणुपरिमाणन्त्विति । परमाणुद्व्यणुकसाधारणमणुपरिमाणन्त्वित्यर्थः । अणुपरिमाणस्य कारणत्वे बाधकमाह—तद्धीति । अणुपरिमाणं हीत्यर्थः । तच्च । तत्तु । न सम्भवतीत्यत्र हेतुमाह परिमाणस्येति । स्वसमानजातीयेति । साजात्यमत्र—परिमाणविभाजकरूपेण अणुत्वत्वमहत्त्वत्वादिना बोध्यम् । अणुजन्यस्येति । उत्कृष्टश्चाणोरणुतरमेवेति भावः । नचाणुजन्यस्याणुतरत्वमस्तु का क्षतिरिति वाच्यम् तथा सति त्रुटेरचाक्षुषत्वप्रसङ्गात्[2][3] । ननु तर्हि द्व्यणुकादेः[4] परिमाणस्य किं जनकमिति चेत्स्वसमवायिकारणगतद्वित्वादिसङ्ख्यैवेति गृहाण । स्फुटी-

१ पृषोदरादीनि यथोपदिष्टमिति पा० सूत्रेण निपातनात्साधुरित्यर्थः।

२ त्रसरेणोः, अयमेव त्र्यणुक इत्यप्युच्यते ।

३ महत्त्वाभावादिति भावः ।

४ आदिना त्र्यणुकम् । तत्र च कारणबहुत्वान्महत्वमेवं घटादौ कारणमहत्त्वान्महत्त्वमिति द्विधैव महत्त्वसम्भवः स च न द्व्यणुके प-

ज्ञात्। एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः।इदमपि योगिप्रत्यक्षे विषयस्य नकारणत्वम्, ज्ञायमानसामान्यं न प्रत्यासत्तिः, ज्ञायमानं लिङ्गं भविष्यति चेदमग्रे [ १११ का० ] मूलस्य न्यूनताम्परिहरति एवामिति। तथाच मूलस्थपारिमाण्डल्यपदमजहत्स्वार्थलक्षणया परममहत्परिमाणादीनामुपलक्षणम्बोध्यमिति भावः। इन्द्रियजन्यलौकिकप्रत्यक्षयोग्ययोर्म्महत्त्वसामान्ययोः स्वविषयकलौकिकप्रत्यक्षे विषयविधया हेतुत्वात्परम(मह)त्वातीन्द्रियत्वे इह (महत्वसामान्ययोः) विशेषणे।

ननु योगिनो विषयमात्रस्य प्रत्यक्षं भवति, तथाच तत्प्रत्यक्षे पारिमाण्डल्यस्याऽपि विषयविधया कारणत्वात्पारिमाण्डल्यभिन्नानामित्ययुक्तमत आह—इदमपीति। पारिमाण्डल्यभिन्नानां कारणत्वं साधर्म्यमिति मूलोक्तमपीत्यर्थः। अस्य इत्यभिप्रायेणेति वक्ष्यमाणग्रन्थेनान्वयः। न कारणत्वमिति। किन्तु योगजधर्म्मस्यैव कारणत्वमित्यर्थः। यदि हि योगिप्रत्यक्षेऽपि विषयस्य कारणत्वं स्यात्तर्हि तेषामतीतानागतविषयकप्रत्यक्षं न स्यात्। अतो लौकिकप्रत्यक्ष एव विषयस्य कारणत्वमुरीकार्यं, योगजधर्म्मस्त्वलौकिकसन्निकर्ष एवेति भावः। ननु ज्ञायमानसामान्यस्य प्रत्यासत्तित्वेन सामान्यलक्षणाजन्ये पारिमाण्डल्यवानित्येवं परमाणुविषयके ज्ञाने पारिमाण्डल्यस्य कारणत्वात्पारिमाण्डल्यभिन्नानामिति मूलम्पुनरयुक्तमेवेत्यत आह

---

रमाणुद्वयेनैव तदुत्पत्तेस्त्र्यणुकस्तु द्व्यणुकत्रयेणेति। अयमेव जालसूर्यमरीचिस्थ उपलभ्यते तथाचोक्तम् जलान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठतमोभागः परमाणुः प्रकीर्त्तित इति। जालं गवाक्षः।

१ विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयस्य हेतुत्वात्। २ यावद्विषयस्य।

नानुमितिकरणमित्यभिप्रायेणोक्तम्। आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणमाकशादेर्बोध्यम्। तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये। तन्न। ज्ञानातिरिक्तं प्रत्येवाकार-

---

ज्ञायमानं सामान्यमिति। न प्रत्यासत्तिरिति। किन्तु सामान्यज्ञानम्प्रत्यासत्तिरित्यर्थः। व्यक्तीभविष्यति चेदमुपरिष्टात् (६४ का.)। नन्वेवमपि परमाणुः घटात्पृथक् पारिमाण्डल्याद् द्व्यणुकवदित्यनुमाने पारिमाण्डल्यस्य कारणत्वमस्त्येव ज्ञायमानलिङ्गस्यानुमितिकरणत्वादिति पुनस्तथैवानुपपत्तिरित्यत आह–ज्ञायमानं लिङ्गमिति। नानुमितिकरणमिति। किन्तु लिङ्गज्ञानं करणमित्यर्थः। अत एवानागतादिलिङ्गकानुमितिर्भवति अन्यथा तु न स्यादिति (६७ का.) वक्ष्यते। आत्ममानसेति। विषयतासम्बन्धेन द्रव्यलौकिकप्रत्यक्षे समवायसम्बन्धेन महत्त्वस्य कारणत्वादिति भावः। आकाशादेः परममहत्परिमाणं न कस्यापि कारणमिति योज्यम्। अत्र केचिदाहुः "कारणत्वञ्चान्यत्र पारिमाण्डल्यादिभ्यः" इत्यत्र भाष्ये आदिग्रहणात्परममहत्त्वं गृह्यत इति सामान्यत आचार्यवचनेन आत्मपरममहत्वस्यापि न कारणत्वमिति, तन्मतं दूषयितुमुपन्यस्यति–तस्यापीति। आत्मपरममहत्परिमाणस्यापीत्यर्थः। ज्ञानातिरिक्तं प्रत्येवेति। "कारणत्वञ्च ज्ञातृधर्म्मेतरभावकार्यापेक्षया" इत्याचार्यग्रन्थः। ज्ञातृधर्म्मा ज्ञानादयस्तदातिरिक्तभावकार्यम्प्रति कारणत्वं पारिमाण्डल्याभिन्नानां साधर्म्यमिति तदर्थः। एवञ्च पारिमाण्डल्यादीत्यादिपदेन परममहत्त्वं गृह्णतामाचार्याणामयमाशयो यत्पारिमाण्डल्यस्य परममहत्त्वादीनाञ्च

णताया आचार्यैरुक्तत्वात् ॥ १५ ॥

ननु कारणत्वं किम्, अत आह—

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७॥

---

ज्ञानातिरिक्तं प्रति न कारणत्वं न तु कारणत्वसामान्याभाव-स्तदनुमत इति भावः ॥ १५ ॥

मूले अन्यथासिद्धिशून्यस्येति। निष्ठत्वं षष्ठ्यर्थः। अन्यथासिद्धिशून्यनिष्ठा या नियता पूर्ववर्त्तिता नियतपूर्ववृत्तिजातीयता तत्कारणत्वम्भवेदित्यर्थः। तेन वनीयदण्डादावपि स्वरूपयोग्यतारूपकारणतासम्पन्ना, अत्रान्यथासिद्धिशून्यस्येत्युक्तेर्दण्डत्वादौ नातिव्याप्तिः। नियतेत्याद्युक्तेः तद्घटत्वावच्छिन्ने "ऽन्यत्रक्लृप्तनियतपूर्वेतया" ह्यन्यथासिद्धिमत्यपि घटत्वावच्छिन्नेऽनन्यथासिद्धे तद्रासभे नातिव्याप्तिः। सर्वनाम्नामुत्स-

---

१ तज्जातीयत्वञ्च लघुनियतपूर्ववृत्तितावच्छेदकदण्डत्वादिमत्त्वमेवेति बोध्यम्। तेन द्रव्यत्वादिना पटादेर्घटकारणत्वन्न तथासति अनन्तद्रव्येषु घटकारणत्वापत्त्या कल्पनागौरवाद्दण्डत्वादिकमेव लघिवाति।

२ तदिति विधेयप्राधान्यान्नपुंसकनिर्देशः। उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागिति महदुक्तेश्च। तत्कार्यनियतपूर्ववृत्तित्वे सति तत्कार्यकारणत्वेन व्यवह्रियमाणाः ये तद्भिन्नभेदानामन्यथासिद्धिशून्यत्वं तथाच तद्रासभत्वस्य घटत्वावच्छिन्ननियतपूर्ववर्त्तितावच्छेदकत्वविरहात्तद्रासभो न घटत्वावच्छिन्नेऽन्यथासिद्ध इति भावः।

३ तिस्रो विधा अस्येति त्रिविधम् तस्य भावस्त्रैविध्यन्त्रिप्रका-

अन्यथेति । तस्य कारणत्वस्य ॥ १६ ॥ १७ ॥

यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥१८॥

तत्र—समवायिकारणे आसन्नं प्रत्यासन्नं का-

---

र्गतः प्रधानपरामर्शित्वात्तत्पदेन कारणस्य ग्रहणे तस्यासंख्या-तविधत्वमिति कथं त्रैविध्यमिति भ्रमवारणाय व्याचष्टे—तस्य कारणत्वस्येति, तथाच कारणत्वं भवेदिति वाक्ये कारणत्वस्यैव प्राधान्यमिति नोक्तदोष इतिभावः ॥ १६ ॥ १७ ॥

यत्समवेतमिति मूलम् यस्मिन्समवेतं समवायेन वर्त्तमानं सत्कार्यम्भवति उत्पद्यते तत्तु समवायिजनकं ज्ञेयम् । यदवच्छिन्नं स्वकारणतावच्छेदकयद्धर्म्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते तद्धर्म्मावच्छिन्नम्प्रति तद्धर्म्मावच्छिन्नं समवायिकारणमिति तु निष्कर्षः । तत्रासन्नमिति मूलस्थतत्रपदमुपादाय तदर्थमाह—तत्रसमवायिकारण इति । आसन्नमित्यस्यार्थमाह प्रत्यासन्नमिति । वर्त्तमानमिति यावत् । जनकमित्यस्यार्थमाह कारणमिति । अत्र "तत्रासन्न" मित्युक्तेः समवायिकारणे नातिव्याप्तिः, ता-

---

रकत्वम्" ब्राह्मणादित्वाद्भावे ष्यञ् ।

१ घटत्वाद्यवच्छिन्नं हि स्वकारणतावच्छेदककपालत्वाद्यवच्छिन्ने समवायसम्बन्धेनोत्पद्यते इति भवति घटत्वाद्यवच्छिन्नं प्रति कपालत्वावच्छिन्नं समवायिकारणम् । स्वकारणतावच्छेदकेत्युक्त्या च न द्रव्यत्वादेर्घटादिसमवायिकारणतावच्छेदकत्वमिति । इत्थञ्च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना कारणता सा समवायिकारणतेति पर्यवसन्नम् । एत समन्वयप्रकारश्चोपदर्शितः प्राक् द्रव्यत्वजातिसिद्धाविति नेह प्रतन्यते ।

रणं द्वितीयमसमवायिकारणमित्यर्थः। अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्,

---

दात्म्यसम्बन्धस्य वृत्त्यानियामकत्वात्। जनकमित्युक्तिस्तु पटसमवायिकारणतन्तुसमवेततन्तुत्वादावतिव्याप्तिवारणाय। तन्तुत्वस्य ह्यन्यथासिद्धत्वेनानन्यथासिद्धनियतपूर्ववृत्तिताया अभावेन न कारणत्वमिति बोध्यम्। विशिष्यासमवायिकारणत्वं निर्विवक्षुर्मूलोक्तलक्षणे दोषमुद्भावयति—अत्र यद्यपीति। अस्य स्यादित्येतत्रयेऽपि सम्बन्धः। तुरी—निष्पन्नवस्त्रवेष्टनदण्डः। पटासमवायिकारणत्वं स्यादिति। पटसमवायिकारणे तन्तौ तुरीतन्तुसंयोगस्य समवायेन वर्त्तमानत्वात्। नचेष्टापत्तिः, असमवायिकारणनाशस्य द्रव्यनाशप्रयोजकत्वात्तुरीतन्तुसंयोगापगमे पटनाशः स्यादिति। एवमुत्तरत्राप्यूह्यम्। द्वितीयन्दूषणमाह—एवमिति, वेगादीनामित्यादिना

---

१ नचात्र प्रमाणाभाव इति शङ्क्यम् द्व्यणुकनाशान्यथानुपपत्तेरेव मानत्वात्। एतेन सर्वत्र समवायिकारणनाशादेव कर्मद्रव्यनाश इति केषाञ्चिदुक्तिः प्रत्युक्ता। अत्र प्रयोज्यप्रयोजकभावो दैशिकविशेषणतया बोध्यः। तथाच दैशिकविशेषणतासम्बन्धेन द्रव्यप्रतियोगिकनाशं प्रति, दैशिकविशेषणतया द्रव्यासमवायिकारणप्रतियोगिकनाशत्वेन कारणत्वमिति फलितम्। नन्वेवं सति यत्र यत्किञ्चित्तन्तुसंयोगनाशात्सहस्रतन्तुकपटनाशस्तत्र तन्तुसंयोगनाशानधिकरणतन्तुष्वपि पटनाशोत्पत्त्या व्यभिचारापत्तिः, ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायियावद्देशवृत्तित्वनियमादिति चेद्‌ नोच्यते प्रतियोगितया द्रव्यनाशं प्रति स्वप्रतियोगिनिष्ठासमवायिकारणतानिरूपितफलोपधानात्मकजन्यत्व—कालिकविशेषणतोभयसम्बन्धेन नाशत्वेन हेतुतेति, द्वितीयसम्बन्धदानाच्च भाविनाशमादाय घटादेः क्षणिकत्वापत्तिर्निरस्ता।

एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात्, एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोग-

---

स्पर्शसङ्ग्रहः । अभिघातादीत्यादिना नोदनपरिग्रहः । असमवायिकारणत्वं स्यादिति । अभिघातसमवायिकारणे दण्डादौ वेगादेः समवायेन वर्त्तमानत्वात् । तृतीयन्दूषणमाह—एवमिति । ज्ञानादीत्यादिना इच्छापरिग्रहः । इच्छादीत्यत्रादिना प्रवृत्तेः परिग्रहः । एवं दूषणत्रयमुद्भाव्य क्रमेणोद्दिधीर्षया पटसमवायिकारणे प्रत्यासन्नं तुरीतन्तुसंयोगभिन्नं पटासमवायिकारणमित्येवं विशिष्यैव तत्तत्कार्यासमवायिकारणलक्षणं कर्त्तव्यमित्याह—तथापीत्यादिना, ननु सामान्यलक्षण एव तत्तद्भिन्नत्वं कुतो

---

१ शब्दहेतुः कर्म्मजन्यः संयोगोऽभिघातः ।

२ शब्दाहेतुः कर्म्मजन्यः संयोगो नोदनम् ॥

३ पूर्वं हि जानाति, तत इच्छति, ततो यतत, इति ज्ञानेच्छाप्रयत्नानामुत्पत्तिक्रमः । तथाचेच्छासमवायिकारणे आत्मनि समवायेन ज्ञानस्य वर्त्तमानत्वादसमवायिकारणत्वापत्तिरेवं प्रयत्नं प्रतीच्छाया अपि बोध्यम् ।

४ तन्तुसमवेतत्वे सति तुरीतन्तुसंयोगभिन्नत्वे सति पटकारणत्वं पटासमवायिकारणत्वम् । एवं दण्डादिसमवेतत्वे सति वेगान्यत्वे सति अभिघातकारणत्वमभिघातासमवायिकरणत्वमित्यनुगमरीतिः । वस्तुतस्तु तुरीतन्तुसंयोगत्वावच्छिन्नप्रतियोगिताकभेदः पटासमवायिकारणलक्षणघटकतया ग्रन्थकर्त्तुर्नाभिप्रेतोऽपि तु तन्तुभिन्नसमवेतत्वावच्छिन्नप्रतियोगिताकभेद एव अन्यथाहस्ततन्तुसयोगादिभेदानां पृथङ्निवेशापत्त्या भेदकूटनिवेशेन गौरवादिति-ध्येयम् । एवमिच्छाद्यसमवायिकारणलक्षणे आत्ममात्रसमवेतत्वावच्छिन्नप्रतियोगिताकभेद एव निवेश्यो न तु ज्ञानत्वाद्यवच्छिन्नभेद इति बोध्यम् ।

५ तुरीतन्तुसंयोगाभिन्नत्वं, वेगादिभिन्नत्वमित्यपि विशेषरूपेण, ।

भिन्नत्वं देयम् । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव । अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र का-

---

न निवेश्यते तत्राह—तुरीतन्तुसंयोगस्त्विति । तथाच येषांकुत्राप्यसमवायिकारणत्वन्नास्ति तद्भेद एव सामान्यलक्षणे निवेशनीय इति भावः। एतच्चानुपदं स्फुटीभविष्यति । इत्थं सामान्यलक्षणे तुरीतन्तुसंयोगभिन्नत्वानिवेशस्य फलमुक्त्वा वेगादिभिन्नत्वानिवेशस्य फलमाह—एवं वेगादिकमपीति । ननु घटरूपादिकं प्रति कपालरूपादिकमसवायिकारणमिति वक्तव्यम् । तच्च नोपपद्यते घटरूपादिसमवायिकारणे घटादौ कपालादेः प्रत्यासन्नत्वाभावादत आह—अत्रेत्यादिना । कार्यैकार्थप्रत्यासत्त्येति । कार्येण सह एकस्मिन्नर्थेऽसमवायिकारणत्वेनाभिमतस्य प्रत्यासत्तिः कार्यैकार्थप्रत्यासतिस्तयेत्यर्थः । एवं कारणेन सह ( यत्कार्यम्प्रत्यसमवायिकारणत्वं वक्तव्यं तत्समवायिकारणेन सह ) एकस्मिन्नर्थेऽसमवायिकारणत्वेनाभिमतस्य प्रत्यासत्तिः कारणैकार्थप्रत्यासत्तिः । क्रमेणोदाहरणमाह—आद्यं यथेति । तथाचेति । द्विविधप्रत्यासत्तिविवक्षणे चेत्यर्थः । स्वसमवायि-

---

४ आत्मविशेषगुणानां ज्ञानादीनाम् ।

र्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा—घटरूपं प्रति कपालरूपमसमवायिकारणम् । तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः,तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। तथाच क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवायसम्बन्धेनेति फलितोऽर्थः । इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमि.ति सामान्यलक्षणं पर्यवसन्नम् । आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं

---

समवायसम्बन्धेनेति । स्वसमवायिनि समवायसम्बन्धेनेति सप्तमीसमासः । अनुयोगित्वञ्च सप्तम्यर्थः । स्वसमवाय्यनुयोगिकसमवायप्रतियोगित्वेनेत्यर्थः । स्वसमवायिसमवेतत्वेनेति यावत् । एतच्च तृतीयान्तद्वयम्, आसन्नमित्यत्रान्वयाभिप्रायकम् । फलितोऽर्थइति । द्विविधप्रत्यासत्त्योरिति शेषः । पर्यवसितमसमवायिकारणसामान्यलक्षणमाह इत्थञ्चेति । कार्यैकार्थप्रत्यासत्तिः समवायसम्बन्धः कारणैकार्थप्रत्यासत्तिः स्वसमवायिसमवेतत्वसम्बन्धः । तथाच समवाय, स्वसमवायिसमवेतत्वान्यतरसम्बन्धेन कारणत्वे सत्यात्मविशेषगुणान्यत्वं सामान्यतोऽसमवायिकारणत्वमित्यर्थः । भिन्नं कारणमिति । अत्रेदं बोध्यम् । समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वमेव

---

१ इत्थञ्च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय—स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नाऽऽत्मविशेषगुण ( ज्ञानादि ) भिन्ननिष्ठा कारणता सा ऽसमयवायिकारणतेति पर्यवसन्नम् ।

कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामन्तदाह—येनेत्यादिना ।

येन सह [1]पूर्वभावः, कारणमादाय [2]वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९॥

---

निमित्तकारणत्वं तेन तुरीपटसंयोगं प्रति तुरीतन्तुसंयोगस्यासमवायिकारणत्वेऽपि न तस्य पटम्प्रति निमित्तकारणत्वक्षतिरिति ॥ १८ ॥

कारणत्वलक्षणेऽन्यथासिद्धिशून्यस्येत्युक्तं तस्यान्यथासिद्धत्वाभाववत इत्यर्थः । तत्राभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादन्यथासिद्धत्वज्ञानमपेक्षितमिति तद्ग्रहोपायमाह—इदानीमित्यादिना । मूले येनेत्यत्र यदित्यस्य यद्रूपं तृतीयायाश्चावच्छेदकत्वमर्थः । पूर्वम्भवनम्पूर्वभावः पूर्व-(क्षण-) वृत्तिता तस्याश्च सनिरूपकत्वादाश्रितत्वाच्च कम्प्रति कस्येत्याकाङ्क्षायां क्रमेण निरूपकमाश्रयञ्चाह—यत्कार्यम्प्रति यद्धर्मावच्छिन्नं प्रति द्वितीयार्थो निरूपितत्वम् । कारणस्य कारणत्वेनाभिमतस्य स्वतन्त्रान्वय-

---

१ यथाश्रुतार्थकत्व तद्व्यक्तित्वेन घटादिविषयकप्रत्यक्षव्यक्तिं प्रति पूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वस्यापि तद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षत्वावच्छिन्न तद्व्यक्तिनिष्ठकार्यतानिरूपिता विषयविधया या कारणता तद्वत्त्वेन स्वविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्यपि तद्व्यक्तित्वमन्यथासिद्धं स्यादित्याशङ्कानिरासाय तदर्थमाह यद्धर्मावच्छिन्नमिति । तथाच तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकत्वेऽपि न तद्व्यक्तित्वविषयकप्रत्यक्षत्वावच्छिन्नपूर्ववृत्तित्वग्रहविशेष्यतावच्छेदकमिति तद्व्यक्तित्वस्य स्वविषयकप्रत्यक्षेत्यनेनान्यथासिद्धत्वप्रसङ्ग इति भावः ॥

जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति । द्वितीयमन्यथासिद्धमाह—

---

व्यतिरेकशालिन इतियावत् । तेन नात्माश्रयः । षष्ठ्यर्थोऽत्र निष्ठत्वम् । येन रूपेण यद्रूपावच्छेदकेन सह गृह्यते ज्ञायते तत्कार्यम्प्रति तद्रूपमन्यथासिद्धमिति समुदितार्थः । उदाहरणमाह यथेति । घटम्प्रति दण्डत्वमितीति । एतच्च घटादौ दण्डत्वादिकमादिममिति वक्ष्यमाणमूलस्वरसादत्रोपदर्शितमौचित्याद् । एवमग्रेऽपि बोध्यम् । अयमत्राशयः । जात्यखण्डोपाध्यतिरिक्तपदार्थस्य यत्किञ्चिद्धर्मप्रकारकत्वानियमस्य वक्ष्यमाणतया दण्डस्य घटं प्रति पूर्ववृत्तिता दण्डत्वेनैव रूपेण वाच्येतिदण्डत्वं दण्डनिष्ठपूर्ववृत्तितावच्छेदकमिति तेन सह दण्डस्य पूर्वभावे तत् ( दण्डत्वम् )

---

१ अनन्यथासिद्धकार्यनियतपूर्ववृत्तिकारणमितिकारणलक्षणघटकान्यथासिद्धलक्षणे कारणत्वप्रवेशे स्वलक्षणे स्वस्य प्रवेशादात्माश्रयदोष इत्यर्थान्तरपरतया व्याख्यातम्,

२ इत्थञ्च तद्धर्म्मावच्छिन्नानिरूपितनियतपूर्ववृतित्वग्रहविशेष्यतावच्छेदकत्वे सति तद्धर्म्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्म्मावच्छिन्नं प्रत्यन्यथासिद्धत्वम्प्रथमामितिनिष्कृष्टोऽर्थः । द्वितीयान्यथासिद्धवारणाय सत्यन्तम् । कपालसंयोगो घटपूर्ववर्तीत्यादिग्रहे कपालस्यापि तादृशविशेष्यतावच्छेदकत्वात्तत्रातिव्याप्तिवारणायविशेष्यदलम् ।

३ एकज्ञानविषयत्वमिह सहार्थः ।

४ एतच्चोत्तरश्लोकस्थमर्थवशादिहापकृष्यते ।

५ एतेपञ्चान्यथासिद्धाइत्युत्तरेणाभिसम्बन्धात् ।

कारणमिति। यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते, तदन्य-

---

अन्यथासिद्धमिति। द्वितीयान्यथासिद्धलक्षणे (कारणमादायैवायस्येत्यत्र) कारणपदं स्वघटितसम्बन्धेन पृथगन्वयव्यतिरेकशालिपरन्तेन नात्माश्रयः। वाशब्दश्चैवार्थे स चेतरयोगव्यवच्छेदार्थस्तद्व्यवच्छेद्यमाह—स्वातन्त्र्येणान्वयव्यतिरेकाविति। अन्वयः स्वाधिकरणे कार्यसत्वम्। व्यतिरेकः स्वाभावाधिकरणे कार्यासत्त्वम्। अन्वयव्यतिरेकयोः स्वातन्त्र्यञ्च स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वम्। दण्डत्वदण्डरूपयोरन्वयव्यतिरेकौ स्वभिन्नदण्डरूपकारणान्वयव्यतिरेकप्रयुक्तौ स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्वादिसत्वस्य दण्डसत्वाधीनत्वात्। कारणमादायैवेति। स्वभिन्नकारणं गृहीत्वैवेत्यर्थः। रूपवद्-

---

१ अत्रपूर्ववाक्यात्पूर्वभावइत्यभिसम्बध्यते। गृह्यतइतितु उत्तरश्लोकात्पूर्ववदिहाप्यपकृष्यते।

२ यथा पार्थ एव धनुर्द्धर इत्यत्र पार्थादन्यत्र धनुर्धरत्वाभावः प्रतीयते। अत्रेयं व्यवस्था द्रष्टव्या विशेष्यसङ्गतस्यैवकारस्यान्ययोगव्यवच्छेदो ऽर्थः। विशेषणसङ्गतस्यैवकारस्यायोगव्यवच्छेदो यथा शङ्खः पाण्डुरएवेत्यत्र। क्रियासङ्गतस्य चैवकारस्यात्यन्तायोगव्यवच्छेदः। यथा नीलं सरोजम्भवत्येवेत्यत्र।

३ प्रथमाश्रयतानियामकः समवायएव। द्वितीयाश्रयतानियामकश्च स्वजन्यभ्रमिजन्यभ्रमिवत्वम्।

४ स्वातन्त्र्येण यत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्य्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताकं यत्तत् तत्कार्यम्प्रत्यन्यथासिद्धत्वम्। इति द्वितीयलक्षणनिष्कर्षः। कपालसंयोगो घटपूर्ववर्तीत्यादिपूर्ववृत्तित्वग्रहविशेष्यतायाः कपालसंयोगनिष्ठायाः कपालावच्छिन्नत्वात्कपालसंयोगेऽतिव्याप्तिवारणाय सत्यन्तम्। दण्डत्वादिवारणाय विशेष्यदलम्।

थासिद्धम्। यथा दण्डरूपम्। तृतीयमाह—अन्यं प्रतीति। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथाऽसिद्धत्वम्। यथा घटादिकं प्रत्याकाशस्य। तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्। आकाशत्वं हि शब्दसमवायिकारणत्वम्। एवंच तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्। ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरितिचेत्, पञ्चमीति गृहाण। नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेद-

---

ण्डसत्वे हि घटसत्वं रूपवद्दण्डाभावे च घटाभावः। नतु रूपसत्वे घटसत्वं रूपाभावे घटाभाव इति कश्चित्प्रत्येति। मूले अन्यं प्रतीति। फलाननुगुणमन्यं प्रतीत्यर्थः। तेन कुलालजनके चतुर्थान्यथासिद्धे नातिव्याप्तिः। तृतीय लक्षणवाक्ये पूर्ववाक्याद्यस्येति वेति चानुवर्त्तते। यदिति च द्वितीयान्तं कार्यपरम् तदेतत्सकलमभिप्रेत्याह अन्यंप्रतिपूर्ववर्त्तित्वंगृहीत्वैवेत्यादि। अन्यमित्यस्य फलाननुगुणमित्यर्थः। अन्यथाऽऽकाशलक्षणमुद्धाव्य शङ्कते शब्दाश्रयत्वेनेति। अन्यं प्रतीत्यादितृतीयाऽन्यथासिद्ध्यभावादिति भावः। चेदिति यद्यर्थेऽव्ययमुच्यते। तर्हीति च शेषः। पञ्चमीति। अवश्यक्लृप्तनियतपूर्ववर्त्तिन इत्यादिकेत्यर्थः। नन्वाकाशत्वं यदि शब्दसमवा'

---

अत्रेतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालित्वमित्येतावदुक्तौ प्रथमद्वितीयान्यथासिद्ध्योः संग्रहेऽपि भेदेनान्यथासिद्धिद्वयप्रदर्शनं शिष्यबुद्धिवैशद्यार्थमितिध्येयम्।

१ नहि कारणत्वमिवाश्रयत्वमपि पूर्ववृत्तित्वग्रहनियतमिति भावः।

कमितिचेत्कवत्त्वादिकं विशेषपदार्थो वेति । चतुर्थम-न्यथासिद्धमाह—जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते, तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः । कुलालमात्रस्य घटं प्रति जनकत्वात् ।

यिकारणत्वं तर्हि शब्दजनकतावच्छेदकत्वं तस्यैव वाच्यं शब्दाश्रयत्वं च शब्द एवेति कथं स्वस्यैव स्वजनकतावच्छेदकत्वमित्याशङ्कते—अथेति । कवत्वादिकमिति । तथाच विशेषस्य सामान्यं प्रति कारणतावच्छेदकत्वेऽपि न क्षतिरिति भावः । विनिगमनाभावेन वहूनां वर्णानां कारणतावच्छेदकत्वे गौरवम् । किञ्च वर्णानामसार्वकालिकतया कारणतावच्छेदकविशिष्टकारणसत्वस्यैव कार्योत्पत्तिप्रयोजकत्वेन गगने ककारासत्वदशायां शब्दान्तरानुत्पादप्रसङ्ग इत्यत आह विशेषपदार्थोवेति ॥ १९ ॥

चतुर्थलक्षणवाक्ये पूर्वतमवाक्यात्पूर्वभाव इत्यनुषज्यते जनकमित्यस्य फलाननुगुणमित्यर्थोऽतो नात्माश्रयः । यत्कार्यजनकम्प्रतीति । अत्राप्यन्यं प्रतीत्याद्यभिधाने तृतीयचतुर्थान्यथासिद्ध्योः संग्रहेऽपि फलानुगुणत्वतदननुगुणत्वयोर्विशेषणयोरुपादानेन तयोर्भेदेनाभिधाने प्रयोजनाभावस्तथापि शिष्यबुद्धिवैशद्याय तथोक्तमिति ध्येयम् । पञ्चमलक्षणवाक्ये नियतो

---

२ तथासति अन्योन्याश्रयः । शब्दो हि श्रोत्रग्राह्यो गुणः । श्रोत्रञ्चाकाशमेवेति ।

१ एकतरपक्षस्थापिका युक्तिर्विनिगमना तस्या अभावेन,
२ निपूर्वकयमधातोर्व्यापकत्वार्थकत्वात् ।

पञ्चममन्यथासिद्धमाह—अतिरिक्तमिति । अवश्य-क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथा-सिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम् ।

व्यापकः स चासावावश्यकः यं विना कार्यसिद्धिर्न भवति सः । स चासौ पूर्वभावी पूर्ववर्त्ती चेति त्रयाणां कर्मधारयसमास स्तत्फलितमर्थमाह—अवश्यक्लृप्तनियतपूर्ववर्त्तिनं एवेति । तथाच घटजातीयं प्रत्यवश्यक्लृप्तनियतपूर्ववृत्तिभिर्दण्डादिभिरेव घटो-त्पत्तिसम्भवे रासभोऽन्यथासिद्ध इति भावः । ननु निबन्धा-

१ आवश्यकेत्यस्यावश्यक्लृप्तेत्यर्थः । एतद्विशेषणोपादानादा-काशस्य न घटादिकारणत्वम् । नियतेत्युक्तिस्तु लाघवाभिप्रायेण । अयमर्थः । अवश्यक्लृप्तत्वस्यैकस्य दुर्वचतया यत्र यत्र प्रामाणिकानां न कारणत्वव्यवहारस्तद्भेदकूटं निवेशनीयम् । इत्थञ्च तत्रानियतान-न्तरासभादीनामेकेन नियतत्वविशेषणेनैव वारणसम्भवे तत्तद्भेदकू-टानिवेशेन महल्लाघवम् । नियतानान्दण्डत्वादीनान्तु अनायत्या तत्तद्भेदवत्त्वं निवेशनीयमेवेति । पूर्वभाविन इत्युक्तिस्तु स्वव्यापक-त्वस्य स्वस्मिन्सत्वेऽपि स्वपूर्वकालवृत्तित्वस्यासत्वेन घटे घटका-रणत्वातिप्रसक्तिवारणाय । इत्थञ्चान्यथासिद्धिशून्यत्वे सति कार्य-नियतपूर्ववृत्तित्वं कारणत्वमिति फलितम् । नियतपूर्ववृत्तित्वञ्च कार्य-तावच्छेदकसम्बन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदे-न विद्यमानात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वम् । अतएव च यागादेः स्वर्गकारणत्वानुपपत्त्या ऽपूर्वसम्बन्धेनाव्यवहितपूर्वव-र्त्तित्वोपपादनं ग्रन्थकृतां सङ्गच्छते ।

२ नवीनाः पुनरेवमाहुः । लघुनियतपूर्ववर्त्तिन एव कार्यसम्भ-वे तद्भिन्नमन्यथासिद्धमित्येकविधमेवान्यथासिद्धत्वम् । लघुत्वञ्च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतञ्च । तत्र प्रथममनेकद्रव्य-समवेतत्वापेक्षया महत्वे । द्वितीयं पाकजगन्धं प्रति रूपप्रागभा-वापेक्षया गन्धप्रागभावे, गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयं दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ । स्वाश्र-

अनेकद्रव्यत्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यत्त्वमन्यथासिद्धम् । नच वैपरीत्ये किं विनिगमकमिति वाच्यं, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।

घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥

न्तरेष्वन्यत्रक्लृप्तेति दृश्यते तत्कथमत्रावश्यक्लृप्तेति कृतमतस्तस्य फलमाह अत एवेति । अवश्यक्लृप्तेति कथनादेवेत्यर्थः । अन्यथा महत्त्वस्यानेकद्रव्यत्वादन्यत्र क्लृप्तनियतपूर्ववर्त्तित्वाभावेन तस्यान्यथासिद्धिर्महत्वेन न स्यादिति भावः। एतदेवोपपादयति तत्र हीति । प्रत्यक्षविषये हीत्यर्थः। अत्रानेकद्रव्यत्वं नानेकद्रव्यसमवेतत्वं तस्य द्व्यणुकेऽपि सत्वेन द्व्यणुकप्रत्यक्षापत्तेः। समवेतसमवेतत्वन्तदित्यपि न आत्मनि तस्याभावेनात्मप्रत्यक्षानुपपत्तेः । किन्त्वणुभिन्नद्रव्यत्वमिति बोध्यम् । नन्वनेकद्रव्यत्वमेव कारणमस्तु महत्त्वमेव कुतोनान्यथासिद्धमिति विनिगन्तुकाशङ्कां लाघवरूपानुकूलतर्केण विनिगमयन्निराकरोति नचेत्यादिना । लाघवात् । जातेरेकत्वेन कारणतैक्यात् । अनेकद्रव्यत्वत्वन्तु न तथाभूतमनेकपदार्थघटितत्वात् ॥ २० ॥

क्रमेणोदाहरणं प्रदर्शयिष्यन्नुपसंहरति मूले एत इत्यादि·

यदण्डसंयोगादिरूपपरम्पराया गुरुत्वात् । एवञ्चैतावतैव निर्वाहेऽन्यथासिद्धस्त्रिधा पञ्चधावेति प्रपञ्चो व्युत्पत्तिवैचित्र्यायेति।

२ उक्तदिशाऽणुभिन्नद्रव्येतरासमवेतत्वे सति सकलाणुभिन्नद्रव्यसमवेतत्वं हि तत्। यथा गोत्वत्वे गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम्।

तृतीयं तु भवद्व्योम कुलालजनकोऽपरः।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

रासभादिरिति। यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे, रासभोऽन्यथासिद्ध इति भावः। एतेष्विति। एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये, पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात्। तथा हि–दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्। नच वैपरीत्ये किं

ना। घटादौ दण्डत्वादिकमादिमम्प्रथममन्यथासिद्धमित्यन्वयः। घटादावित्युत्तरत्रापि यथायोगं सम्बध्यते ॥ २१ ॥

सिद्धकारणभावैरिति। सिद्धः क्लृप्तः कारणभावः (कारणत्वं) येषान्तैरित्यर्थः। असावित्यस्यार्थमाह–पञ्चमोऽन्यथासिद्ध इति। अन्यथासिद्ध इति तल्लक्षणलक्षकं तेनैव तल्लक्षणेनैव परेषां पूर्वोक्तचतुर्णां लक्षणानां चरितार्थत्वात् कृतप्रयोजनकत्वात्संग्रहादिति यावत्। तथाहि। तत्प्रदर्शयति। कार्यसम्भव इति। कार्यमत्र घटादिस्तस्यैव प्रक्रान्तत्वात्। ननु दण्डत्वादेरपि दण्डादिवदवश्यक्लृप्तनियतपूर्ववृत्तित्वेन दण्डादेरेव घटादिकारणत्वं न दण्डत्वादेरित्यत्र किं विनिगमकमित्याशङ्कान्निराकरोति–नचेत्यादिना। दण्डत्वस्येति दण्डरूपस्याप्युपलक्षणम्। दण्डघटितपरम्पराया इति। स्वाश्रय ( दण्ड ) जन्यभ्रमिजन्यभ्रमिवत्त्वं दण्डत्वस्य घटे सम्बन्धः। दण्डस्य कारणत्वे तु स्वजन्यभ्रमिजन्यभ्रमिवत्त्वमित्येतावदेवेत्याश्रय [ दण्ड ] प्र-

विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्ड-घटितपरम्परायाः सम्बन्धत्वकल्पने गौरवात्। एवम-न्येषामप्यनेनैव चरितार्थत्वं संभवति ॥ २१ ॥ २२ ॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्॥२३॥

गुणकर्मेति। असमवायिकारणत्वं गुणकर्मभि-न्नानां वैधर्म्यं, न तु गुणकर्मणोः साधर्म्यमित्यत्र ता-त्पर्यम्। अथवा असमवायिकारणवृत्तिसत्ताभिन्नजा-तिमत्त्वं तदर्थः। तेन ज्ञानादीनामसमवायिकारणत्व-विरहेऽपि न क्षतिः ॥ २३ ॥

---

वेशलक्षणं गौरवं स्यादित्यर्थः। एवम्। दण्डत्ववत्। अन्ये-षाम्। दण्डरूप—आकाश—कुलालपितृणाम्। अनेनैव पञ्च-मान्यथासिद्धेनैव (तल्लक्षणेनैव)। चरितार्थत्वं सङ्ग्रहः ॥ २२ ॥

मूले गुणकर्ममात्रवृत्त्यसमवायिकरणत्वमित्युक्तं तच्चायुक्त-मात्मविशेषगुणेषु (ज्ञानादिषु) अव्याप्तेरतो वैधर्म्यपरतया मूलं व्याचष्टे—असमवायिकारणत्वमिति। साधर्म्यप्रकरणे वैधर्म्य-कथनमयुक्तमित्याशयादाह—अथवेति। असमवायिकारणं द्व्यणु-कादेः परमाणुसंयोगतत्क्रियादिः तद्वृत्तिः सत्ताभिन्ना जातिः गुणत्वं कर्मत्वञ्चेति तदादाय सर्वत्र गुणकर्मणोर्यथायथं लक्ष-णसमन्वयः। सत्ताभिन्नद्रव्यत्वजातिमति द्रव्येऽतिव्याप्तिवारणाय वृत्त्यन्तम्। तत्रैव सत्ताजातिमादायातिव्याप्तिवारणाय सत्ता-भिन्नेति। द्रव्यगुणान्यतरत्वधर्ममादाय तत्रैवातिव्याप्तिवारणाय

---

१ मात्रंकार्त्स्न्येऽवधारण इति कोशात्कार्त्स्न्यार्थकत्वमत्राभिप्रेत्य शङ्का, अवधारणार्थकत्वमभिप्रेत्य च समाधानम्।

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।

अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वमिह समवायादिसम्बन्धेन वृत्तिमत्त्वं, विशेषणतया नित्या-

---

जातीति । वृत्तित्वञ्जातिमत्त्वञ्च समवायेन विवक्षितं, तेन कालिकेन द्रव्यत्वस्य गुणादौ गुणत्वादेश्च द्रव्ये सत्त्वेऽपि नातिव्याप्तिः ॥ २३ ॥

नन्वत्र नित्यद्रव्येभ्य इति मूलमयुक्तं गगनादिकं सर्वदैवास्तीति व्यवहारान्नित्यद्रव्येष्वपि कालिकसम्बन्धेनाश्रितत्वसत्त्वादित्यत आह- आश्रितत्वमिति । इह । तार्किकमते । नित्यद्रव्यातिरिक्तत्वं लक्ष्यतावच्छेदकमाश्रितत्वञ्च लक्षणमिति मूलार्थः । समवायादिसम्बन्धेन । सर्वाधारतानियामककालिक–दैशिक–विशेषणता–सम्बन्धातिरिक्तसम्बन्धेन । विशेषणतयेति । कालिकविशेषणतयेत्यर्थः । न च परमाणोरपि संयोगेन वृत्तिमत्त्वात्तत्रातिव्याप्तिरिति वाच्यम् । पतनप्रतिबन्ध-

---

१ वेदान्तिनाम्मते तु नित्यज्ञानस्याप्यनाश्रितत्वाङ्गीकार इति ध्येयम् ।

२ जन्यगुरुत्वस्यैव पतनकारणतया तदभावादेव परमाणोः पतनासम्भवेन तत्संयोगस्य पतनप्रतिबन्धकत्वकल्पने प्रमाणाभावाद् अन्यथा पाण्यादिप्रतिबन्धकाभावदशायां प्रकृष्टगुरुत्वरयेत्र सर्वेषामेव परमाणूनामधः पतनापत्तेरितिभावः ।

नामपि कालादौ वृत्तेः ॥

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४॥
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षित्यादीनामिति । क्षितिर्जलमिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वे

---

कसंयोगस्यैव वृत्तिनियामकतया तत्संयोगस्य वृत्त्यनियामकत्वादिति[1] ॥ ० ॥

क्षित्यादीनान्नवानान्त्विवति मूलस्थतुशब्देन सूचितमर्थं प्रकटयति—इदानीमिति । तथाच द्रव्यातिरिक्तसाधारणसाधर्म्यप्रकरणव्यवच्छेदार्थको मूलस्थतुशब्द इति भावः। क्रियावत्त्वमिति । कर्मवत्त्वमिति महादेवसम्मतः पाठः । युक्तश्चायमग्रिमग्रन्थस्वरसात् । यद्यपि 'धात्वर्थो भावना सैवोत्पादना सैव च क्रियेति' हर्युक्तेः क्रियाशब्देन धातोरर्थ एवान्यत्र प्रसिद्धस्तथापीह कर्मैव तदर्थः । अत आकाशादौ नातिप्रसङ्गः । वेगवत्त्वं[2] च वेगसम्बन्धित्वन्न तु वेगसदृशत्वम्

१ अयामितिशब्दः साधारणसाधर्म्यप्रकरणनिरुक्तिसमाप्त्यर्थकः
२ नात्र तुल्यार्थे वतिरपि त्वस्त्यर्थे मतुविति तत्त्वम् ।

गवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव, ग-

---

एतच्चानुपदं स्फुटीभविष्यति । दिक्कृतयोः परत्वापरत्वयोर्हेतुरिदमस्माद्विप्रकृष्टमिदमस्मात्सन्निकृष्टमित्यपेक्षाबुद्धिद्वयम् । कालकृतयोः परत्वापरत्वयोर्हेतुरयमस्मादधिकतरकालसम्बद्धोऽयमस्मादल्पतरकालसम्बद्ध इत्यपेक्षाबुद्धिद्वयम् । तच्च व्यवहर्तृपुरुषप्रयत्नसाध्यमिति कृत्वा यत्र तदुभयं नोत्पन्नन्तत्र परत्वापरत्वयोरनुत्पादादव्याप्तिमाशङ्क्य निरस्यति—न चेत्यादिना । समानाधिकरणत्वञ्चैकाधिकरणवृत्तित्वम् । तथाच परत्वाद्यधिकरणं यत्र परत्वाद्युत्पन्नन्तत् तद्वृत्तिर्द्रव्यत्वव्याप्या या जातिः पृथिवीत्वादिस्तद्वत्त्वं सर्वत्र पृथिव्यादौ वर्त्तत इति लक्षणसमन्वयः । आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । तत्रैव सत्तामादायातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । व्याप्यत्वञ्च स्वाधिकरणवृत्त्यभावप्रतियोगित्वरूपमिति द्रव्यत्वस्य न द्रव्यत्वव्याप्यत्वम् । अपकृष्टेति । अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः । तेन परमाणौ नाव्याप्तिः । तच्च ।

---

१ एतच्च क्रमेण बोध्यम् ।

२ क्रियासमवायिकारणतावच्छेदकं मूर्त्तत्वजातिरिति केचित्, तन्न । अविभुवृत्तिसंयोगे वैजात्यमङ्गीकृत्य तादृशविजातीयसंयोगस्य वेगाद्यजन्यक्रियायां कारणत्वमङ्गीकृत्यापि विभौ क्रियावारणसम्भवात् ।

गनादिपरिमाणस्य कुतोप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २४ ॥ २५ ॥

कालखात्मदिशां सर्वगतत्वं परमं महत्।
क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६॥

कालेति। कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च। परममहत्त्वत्वं जा-

---

निरुक्तमूर्त्तत्वञ्च। चोऽत्र त्वर्थे न तु समुच्चये समुच्चयस्यार्थान्तरस्याभावात्। तेषामेव। क्षित्यप्तेजोवायुमनसामेव। पूर्ववत्। परत्वापरत्वसमानाधिकरणेत्यादिकाथितविवक्षितार्थवत् ॥ २४ ॥ २५ ॥

कालादौ स्पन्दाभावेन गत्यसम्भवादाह-सर्वमूर्त्तेति। जातिविशेष इति। आत्ममानसप्रत्यक्षे आत्मपरममहत्त्वस्य कारणत्वात्तदवच्छेदकतया सिद्ध इत्यर्थः। ननु कालादिगतपरममहत्त्वस्य प्रत्यक्षाजनकत्वात्कथं परममहत्त्वत्वं तदवच्छेदकमतिप्रसक्तत्वादित्यरुचेराह-अपकर्षेति। अपकर्षानाश्रयमहत्परि-

---

१ एषामेवेति क्वचित्पुस्तके पाठः।

तिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। अत्र ग्राह्यत्वं

---

माणवत्त्वमिति तदर्थः। तेन परमाणौ नातिव्याप्तिः। बहिरिन्द्रियेति। बहिरिन्द्रियैर्घ्राणरसनचक्षुस्त्वक्श्रोत्रैर्ग्राह्यास्तज्जन्य प्रत्यक्षविषयीभूता ये विशेषगुणा गन्ध–रस–रूप–स्पर्श–शब्दास्तद्वत्त्वमित्यर्थः। मनोरूपेन्द्रियग्राह्ये आत्मन्यतिव्याप्तिवारणाय बहिः पदम्। बहिष्ट्वं च मनोभिन्नत्वमेव, बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति

---

१ अणुपरिमाणेषु हि द्व्यणुकपरिमाणमेवापकर्षाश्रयो न परमाणुपरिमाणम्। न च परमाणुपरिमाणे ऽणुपरिमाणापेक्षयाऽपकर्षाभावेऽपि घटादिपरिमाणापेक्षयाऽपकर्षो वर्त्तत एव। प्रत्यक्षसाधनत्वतदसाधनत्वाभ्यान्तयोरप्युत्कर्षापकर्षसम्भवादिति वाच्यम्। परिमाणनिष्ठोत्कर्षापकर्षयोः परिमाणविभाजकजात्या स्वसजातीयपरिमाणावधिकत्वस्यैव नियमात्, कथमन्यथा विभुपरिमाणे परमाणु परिमाणापेक्षया नापकर्षः क्रियोपयोगित्वतदनुपयोगित्वाभ्यां तयोरप्युत्कर्षापकर्षयोः सम्भवात्। उत्कर्षापकर्षौ गुणनिष्ठजातिविशेषौ। अयमस्मादुत्कृष्ट इत्यादिप्रतीतिबलात्तयोरपि सावधिकत्वस्वीकारादिति बोध्यम्

२ बहिरिन्द्रियजन्यप्रत्यक्षविषयजातिमदित्यर्थः। संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्यापि कारणत्वेन तदभावात्कालसंयोगो न प्रत्य-

लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम् । तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वा-

---

कालादावतिव्याप्तिवारणाय विशेषेति । विशेषगुणत्वञ्च रूपाद्यन्यतमत्वमिति गुणनिरूपणे [ ९० का. ] वक्ष्यते । विशेषत्वञ्चात्र सामान्यगुणाभिन्नत्वं तत्सहितगुणत्वमेव विशेषगुणत्वन्तथाच क्रियाया अपि तथात्वेन[1] तामादाय मनस्यतिव्याप्तेर्गुणपदम् । लौकिकत्वनिवेशस्य फलमाह—तेनेति । संयोगादिषड्विधसन्निकर्षजन्यं प्रत्यक्षं लौकिकप्रत्यक्षमिति [ ५९ का. ] वक्ष्यते । तथाच यत्र घटे[2] पूर्वस्मिन्दिने चाक्षुषादि जातन्तत्रैव परदिने चक्षुरादिसन्निकर्षे सति " अयं घटो ज्ञात " इत्याकारकं प्रत्यक्षमुत्पद्यते तत्र [ प्रत्यक्षे ] ज्ञानं घटस्तयोर्विषयतारूपः सम्बन्धश्च विषयो[3] भवति । तत्र घटांशे प्रत्यक्षीयलौकिकविषयताऽस्ति, ज्ञानांशे त्वलौकिकीति[4] न तस्य ( ज्ञानस्य ) बहि-

---

क्षविषय इति जातीयपर्यन्तानुधावनम् । आवश्यकञ्च ग्राह्यसजातीयत्वविवक्षणमन्यथा परमाणुरूपादेरप्रत्यक्षतया तत्रातिव्याप्तिप्रसङ्ग इति भावः ।

१ विशेषत्वेन,

२ यद्घटविषयकम् ।

३ विशिष्टबुद्धेर्विशेषणविशेष्यसम्बन्धैतत्त्रितयविषयकत्वस्योक्तपूर्वत्वात् ।

४ चक्षुरादेस्तत्र लौकिकसन्निकर्षाभावात् ।

त्त्वादिति आत्मनि नातिव्याप्तिः। न वा प्रत्यक्षाविषय-
रूपादिमति परमाण्वादावव्याप्तिः। तस्यापि स्वरूप-
योग्यत्वात्। महत्त्वलक्षणकारणान्तरासन्निधानाच्च न
प्रत्यक्षम्। अथवा आत्मावृत्तिविशेषगुणवत्त्वंतरत्वम्।
चत्वारीति। पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्॥ २६॥

---

रिन्द्रियग्राह्यत्वं येन तदादायात्मन्यतिव्याप्तिः प्रसज्येतेति
भावः। स्वरूपयोग्यत्वनिवेशस्य फलमाह—नवेति। परमाण्वादा-
विति। आदिना द्व्यणुकम्। तस्यापि। परमाण्वादिगतरूपादेरपि।
स्वरूपयोग्यत्वादिति। बहिरिन्द्रियजन्यलौकिकप्रत्यक्षं प्रति
उद्भूतरूपत्वेनैव कारणतया कारणतावच्छेदकधर्मवत्त्वस्यैव स्व-
रूपयोग्यत्वादित्यर्थः। तथाच बहिरिन्द्रियजन्यप्रत्यक्षीयलौ-
किकविषयतावच्छेदकधर्मवत्त्वमेव ग्राह्यत्वमिति भावः। ननु
परमाणुरूपादेर्योग्यत्वे कुतो न तस्य प्रत्यक्षमतआह—महत्त्वेति।
लौकिकविषयतासम्बन्धेन द्रव्यसमवेतप्रत्यक्षे सामानाधिकर-
ण्यसम्बन्धेन कारणस्य महत्त्वस्य परमाणुरूपादावभावान्न त-
ल्लौकिकप्रत्यक्षमिति भावः। ननु चक्षुरादिगतरूपादिविशेषगु-
णानामनुद्भूतत्वेन बहिरिन्द्रियजन्यप्रत्यक्षीयलौकिविषयताव-
च्छेदकोद्भूतरूपत्वादीनाञ्चक्षुरादिगतरूपादावभावादव्याप्तिरि-
त्यतो लाघवाच्चाह—अथवेति। अत्र कल्पे दैशिकपरत्वापर-
त्वमादाय मनस्यतिव्याप्तिवारणाय विशेषेति। स्पर्शवत्त्वम्।

---

१ इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परम्मनः। मनसस्तु परा बु-
द्धिर्यो बुद्धेः परतस्तु सः। इत्यादिप्रमाणमत्र,

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥

द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम् । नच द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं सा-

---

समवायेन स्पर्शवत्त्वम् । तेन कालिकादिना कालदिशोर्नातिव्याप्तिराशङ्कनीया ॥ २६ ॥

द्रव्यारम्भकत्वम् । द्रव्यजनकत्वम् । द्रव्यसमवायिकारणेत्यादि । सत्तादिकमादाय गगनेऽतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । आकाशशरीरिणामितिमूलस्थशरीरिपदमात्मपरतया व्याचष्टे–आकाशात्मनामिति । लक्ष्ये लक्षणं योजयितुं[1] शब्दज्ञानादीनामव्याप्यवृत्तित्वं क्षणिकत्वञ्चोपपादयति–आकाशस्येत्यादिना । किञ्चिदवच्छेदेन । गृहाद्यवच्छेदेन । आकाशे इति शेषः । अन्यावच्छेदेन । बाह्यावच्छेदेन । इत्थञ्चाव्याप्यवृत्तित्वम् स्वाधिकरणवृत्त्यभावप्रतियोगित्वम् । क्षणिकत्वञ्च क्षणभवः क्षणिक इति व्युत्पत्या क्षणमात्रवृत्तित्वम् । तादृशस्य विशेषगुणस्यानभ्युपगमादाह–क्षणिकत्वञ्चेति । ध्वंसप्रतियोगिविशेषगुणवत्त्वस्य घटादावतिव्याप्तिरतोवृत्त्यन्तम् । नचेदानीमपि यद्घटरूपादिकं तृतीयक्षणे नष्टं तत्रातिव्याप्तितादवस्थ्य-

---

१ समन्वयितुम् ॥

धर्म्यामित्यर्थः। आकाशस्य विशेषगुणः शब्दः स चाव्याप्यवृत्तिः। यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात्। क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्। योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः। एवं ज्ञानादीनामपि। ज्ञानादिकं यदात्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोस्त्येव। एवं ज्ञानादिकमपि क्षणद्वयावस्थायि। इत्थं चाव्याप्यवृत्तिविशेषगु-

---

मिति वाच्यम्। अग्रे समाधास्यमानत्वात्। योग्यविभुविशेषगुणानामिति। योग्याः प्रत्यक्षयोग्या ये विभूनामाकाशादीनाङ्गुणाः शब्दादयस्तेषामित्यर्थः। स्वोत्तरवर्त्तीति। स्वपदं नाश्यत्वाभिमतपरम्। तदुत्तरवर्त्ती तद्द्वितीयक्षणवर्त्ती यो विशेषगुणस्तन्नाश्यत्वादित्यर्थः। शब्दस्याव्याप्यवृत्तित्वक्षणिकत्वे उपपाद्य ज्ञानादीनामपि ते उपपादयति—एवमित्यादिना। क्षणिकपदस्य वैयर्थ्याल्लक्षणद्वया-

---

१ अत्र च प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वाव्यवहितपूर्ववृत्तित्व, स्वसामानाधिकरण्योभयसम्बन्धेन योग्यविभुविशेषगुणः कारणम्। कार्यदले योग्यत्वानुपादाने प्रायश्चित्तादिजन्यादृष्टनाशे व्यभिचारः। योग्यत्वञ्च न लौकिकप्रत्यक्षविषयत्वमात्रं निर्विकल्पकज्ञानस्य स्वोत्तरोत्पन्नज्ञानादिनाश्यत्वाप्रसक्तेःकिन्तु लौकिकसाक्षात्कारविषय—निर्विकल्पकान्यतरत्वम्। यत्त्वतीन्द्रियजातिशून्यत्वन्तत्त्वमिति तन्न। अदृष्टत्वस्य जातित्वे मानाभावेन तत्र (अदृष्टे) व्यभिचारात्। रूपादिनाशे व्यभिचारवारणाय विभ्विति। संयोगादिनाशे व्यभिचारवारणाय विशेषेति। कारणदले योग्यत्व-विशेषत्वयोरुपादानान्न द्वितीयक्षणोत्पन्नादृष्टसंयोगादिना तृतीयक्षणे अपेक्षाबुद्धिनाशः। सामानाधिकरण्यसम्बन्धनिवेशाच्च

णवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः। पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम्। पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम्। नच रूपादीनामपि कदाचित्तृतीयक्षणे नाशसम्भवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्। चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात्। अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिभिप्रायेणार्थमाह इत्थञ्चेति। अव्याप्यवृत्तीत्युक्तमिति। इहाव्याप्यवृत्तिपदेन दैशिकाव्याप्यवृत्तिगुणत्वव्याप्यजातिमत्त्वं ज्ञेयम्। तेन रूपादीनामपि कालिकाव्याप्यवृत्तित्वेऽपि न क्षतिः। ईश्वरज्ञानादेर्व्याप्यवृत्तित्वात्तत्राव्याप्तिवारणाय गुणत्वव्याप्यजातिमदिति। चतुःक्षणवृत्तीति। चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि तद्वृत्तिर्या जातिर्ज्ञानत्वादिस्तद्वान् विशेषगुणो ज्ञानादिस्तद्वत्त्वस्यात्मादौ सत्त्वाल्लक्षणसमन्वयः। अत्र चावृत्तित्वं समवायेन विवक्षितम्। तेन कालिकसम्बन्धेन ज्ञानत्वस्य जन्यमात्रे वृत्तित्वेऽपि न क्षतिः[2]। ज्ञानत्वादेर्जन्यवृत्तित्वादसम्भववारणाय चतुःक्षणवृत्तीति। तदर्थत्वादिति। क्षणिकविशेषगुणवत्त्वमित्यस्यार्थत्वादित्यर्थः। ननु प्रथमोपस्थितत्वरूपलाघवात्त्रिक्षणवृत्तित्वमुपेक्ष्य चतुःक्षणवृत्तित्वपर्यन्ता-

शब्दादिना व्यधिकरणानां ज्ञानेच्छादीनां नाशः। प्रथमसम्बन्धनिवेशाच्च न ज्ञानादिना तदुत्पत्तिकालिकेच्छादीनां नाशः। केचित्स्वत्वस्य तद्व्यक्तिपर्यवसायितया तत्तद्गुणस्य तत्तद्गुणो नाशकः अपेक्षाबुद्धेस्तु द्वित्वप्रत्यक्षमित्याहुः।

१ ईश्वरस्य शरीरविरहेण तदवच्छिन्नत्वासम्भवादिति भावः।

२ नासम्भवः।

कं तिष्ठति। रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः। ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम्। यद्याकाशजीवात्मनोः साधर्म्यं, तदा जन्येति न देयम्, द्वेषत्वादिकमादाय लक्षणसमन्वयात्। परममहत्त्वस्य तादृशगुणत्वाच्चतुर्थक्षणे क्षित्वादीनामपि नाशाभ्युनुधावने किम्फलमत आह—अपेक्षाबुद्धिरिति। तथाच त्रिक्षणवृत्तित्वस्य प्रवेशे ज्ञानत्वस्य[1] संग्रहो न स्यादिति भावः। चतुःक्षणवृत्तिजन्यावृत्तीत्यस्य फलमाह—रूपत्वादिकन्त्विति। तद्व्युदासः। तस्या रूपत्वजातेर्व्युदासः व्यावृत्तिः। जन्येत्यस्य फलमाह—ईश्वरेति। शरीरिणामिति मूलस्थशरीरिपदस्य यथाश्रुतार्थकत्वाभिप्रायेणाह[2]—यदीति। ननु जन्यत्वाप्रवेशे ज्ञानत्वेच्छात्वप्रयत्नत्वजातीनां चतुःक्षणवृत्त्यवृत्तित्वाभावात्कथं लक्षणसमन्वय इत्यत आह—द्वेषत्वादिकमिति। आदिना शब्दत्वं तदादायाकाशे लक्षणसमन्वय इति बोध्यम्। विशेषपदनिवेशस्य फलमाह—परममहत्त्वस्य। तादृशगुणत्वात्। चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वात्। तथाच तदादाय कालादावतिव्याप्तिरिति भावः। ननु परममहत्त्वत्वं न जातिरित्युक्तम्भाक्, तथाच तदादाय कथं कालादावतिव्याप्तिरित्यत आह—चतुर्थक्षण इति। यद्वा[3] ननु जन्यपदानुपादाने परमम-

1 अनेन ज्ञानत्वमादायात्मनि लक्षणसमन्वयायैव त्रिक्षणवृत्तित्वमुपेक्षितम् इच्छात्वमादाय लक्षणसमन्वये तु त्रिक्षणवृत्तीत्यपि शक्यते वक्तुमिति सूचितम्।

2 स्वावच्छिन्नज्ञानादिमत्त्वसम्बन्धेन शरीरविशिष्टार्थकत्वाभिप्रायेण।

3 यदीत्याद्यनुपदोक्तग्रन्थस्वरसादवतारयति यद्वेति।

पगमाद्दित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति। त्रिक्षणवृत्तित्वं वा वाच्यम् । द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

रूपेति। पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः। नच चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम्। नच घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्वमव्याप्तमिति वाच्यम्, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्ष-

---

ह्रस्वत्वस्य चतुःक्षणवृत्तिवृत्तित्वान्नपरममहत्त्वमादाय कालादावतिव्याप्तिरत आह– चतुर्थक्षण इति । तथात्वात् । तादृशजातिमद्गुणत्वात् । प्रथमोपस्थितत्वरूपं लाघवमभिसन्धायाह– त्रिक्षणेति। आत्मनि, जीवात्मनि । रागद्वेषादीनाञ्जीव एव सत्त्वादीश्वरस्य तु करुणावरुणालयत्वादिति भावः ॥ २७ ॥

चक्षुरादीनामिति। आदिना घ्राणादिपरिग्रहः । तत्रापि चक्षुरादावपि। तेजस्त्वेनेति हेतौ तृतीया । अनुमानप्रकारश्च चक्षुरादि–रूपवत् तेजस्त्वाद्वह्निवदिति। एवमुत्तरत्राप्यूह्यम्। पृथिवीत्वादौ द्रववद्वृत्तित्वमुपपादयति घृतजत्वित्यादिना।

णसमन्वयः । नच प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तम्, अतिव्याप्तं च रूपादाविति वाच्यम्, चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति । गुरुणी द्वे इति । गुरुत्ववत्त्वं रसवत्त्वं पृथिवीजलयोरित्यर्थः । नच घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात् । द्वयोरिति । पृथिवीतेजसोरित्यर्थः । नच नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८ ॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।

---

परमाण्वादीनामपि योगिप्रत्यक्षविषयत्वमस्त्वेवेति कथमव्याप्तिरतो दूषणान्तरमाह— अतिव्याप्तश्चेति । घटो वायुमानिति वाय्वंशे उपनीतभानात्मकघटविशेष्यकचाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति । गुरुत्वं रक्तिकमाषकतोलकत्वादि । इदमुपलक्षणं पतनवत्त्वमित्यपि बोध्यम् । पतनत्वं गुरुत्वासमवायिकारणककर्म्मत्वम् उल्का पततीत्यादौ पतधातुर्गत्यर्थः । वस्तुतस्तु गुरुत्वासमवायिकारणककर्म्मवृत्तिपतनत्वं गुरुत्वजनकतावच्छेदकतया सिद्धो जातिविशेष एव । तदनुमानादिति । अनुमानप्रकारश्च घ्राणेन्द्रियादि रसादिमत् पृथिवीत्वात्सितावदिति । पृथिवीतेजसोरित्यर्थ इति । अयञ्च योग्यताबललभ्योऽर्थः । नैमित्तिकद्रवत्व-

१ गुरुत्वमसमवायिकारणं यस्य तत् । समासान्तः कप् ।

आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः ।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

यदुक्तमिति । ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु कस्यापि न वैधर्म्यम्, केवलान्वयित्वात् ॥ २९ ॥

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।

---

समानाधिकरणेत्यादि । नैमित्तिकद्रवत्वं हि घृतादौ द्रुतसुवर्णे च तद्वृत्तिद्रव्यत्वव्याप्या जातिः क्रमेण पृथिवीत्वं तेजस्त्वं च तद्वत्त्वं घटादौ वन्ह्यादौ चेति लक्षणसमन्वयः ॥ २८ ॥

ननु सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमित्युक्तन्तत्कस्य वैधर्म्यमित्यत आह– ज्ञेयत्वादिकमिति । केवलान्वयित्वादिति । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमित्यसकृदभिहितम्प्राक् ॥ २९ ॥

वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृताञ्चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च॥१॥

इति प्राचीनश्लोकमनुसृत्य वायोस्तावद्गुणानाह मूले– स्पर्शादयोष्टाविति । स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वान्यष्टौ वेगाख्यसंस्कारश्चेति नव वायोर्गुणा इत्यर्थः । तेजसो गुणानाह– स्पर्शाद्यष्टाविति ॥ ३० ॥

बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः, शब्दश्च ते च खे ॥३३॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥
ते च ख आकाशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

---

अपां गुणानाह— स्पर्शादयोष्टाविति ॥ ३१ ॥

पृथिव्या गुणानाह स्नेहहीना इति। एते अव्यवहितपूर्वोक्ताः स्पर्शादयः। आत्मनो गुणानाह बुध्यादिषट्कमिति।बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः । संख्यादिपञ्चकम् । सख्यापरिमाणपृथक्त्वसंयोगाविभागाः एतेचतुर्दशआत्मनः गुणास्युरित्यन्वयः ॥३२॥

कालदिशोर्गुणानामैक्यादेकोक्त्यैवाह—संख्यादिपञ्चकमिति। आकाशस्य गुणानाह— शब्दश्चेति । तथाचाकाशे शब्दः संख्यादयः पञ्चैवं षड् गुणा इत्यर्थः ॥ ३३ ॥

ईश्वरस्य गुणानाह— संख्यादीति॥ नव्यास्तु संख्याबुद्धीच्छाप्रयत्नसुखानीति पञ्चैवेश्वरस्य गुणा इत्याह। मनसो गुणानाह परापरत्व इति । संख्याद्याः पञ्च । संख्या परिमाण पृथक्त्वसंयोगविभागाः । मानसे मनसि । प्रज्ञादित्वात्स्वार्थेऽण् ॥

इति प्रकाशानुगतायामभिनवप्रभाख्यायां मुक्तावली व्याख्यायां पदार्थसाधर्म्यनिरूपणन्नाम द्वितीयः परिच्छेदः ॥*॥ २॥

निरूपयतीति । लक्षणप्रामाण्यस्वरूपाभिधानं निरूपणं तत्करोतीत्यर्थः। एवमग्रेऽपि बोध्यम्। गन्धहेतुत्वं कालादौ गतमतो व्याचष्टे—गन्धेति । तथाच समवायसम्बन्धेन गन्धवत्त्वं पृथिव्या

---

१ गन्धनिष्ठकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धा-

पदार्थानां साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादि कं निरूपयति—तत्र क्षितिरित्यादिना ।

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।

षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः॥ ३५॥

गन्धहेतुरिति । गन्धसमवायिकारणमित्यर्थः । यद्यपि-गन्धवत्त्वमात्रं लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथाहि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिद्ध्यति । अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । नच पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति लक्षणमुक्तम्भवति । गन्धवत्त्वमित्यस्य गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । तेन सुरभ्यसुरभिकपालारब्धनिर्गन्धघटे नाव्याप्तिः । वृत्त्यन्तेन न जलत्वमादाय जलादावतिव्याप्तिः । द्रव्यत्वव्याप्येत्युक्त्या तत्रैव सत्तामादाय न सा, जातिपदोपादानाच्च जलपृथिव्यन्यतरत्वमादाय जले न सा, वृत्तित्वमपि

---

घच्छिन्नकालत्वावच्छिन्नकारणताया जन्यानां जनकःकाल इत्यादिवक्ष्यमाणरीत्याकालेऽपि सत्त्वात्कालेऽतिव्याप्तिः। ननु गन्धत्वावच्छिन्नकार्यत्वाविवक्षणेनैष दोष आपतित आवश्यकश्च तद्विवक्षणमन्यथा कार्यतायां समवायसम्बन्धावच्छिन्नत्वविवक्षणेऽपि गन्धनिष्ठसमवायसम्बन्धावच्छिन्नगुणत्वावच्छिन्नकार्यतानिरूपितद्रव्यत्वावच्छिन्नकारणतामादाय जलादावतिव्याप्त्यापत्तिर्दुर्वारा स्यात् । तद्विवक्षणे तु असाधारणकारणत्वमापाद्येत तच्चातीतादिव्यवहारस्प्रत्येव कालस्य न त्वन्यस्प्रतीत्याशयेनाह आदीति । तेन च गन्धत्वावच्छिन्नकारणविजातीयादृष्टसंग्रह इति ध्येयम् ।

१ द्रव्यत्वन्यूनवृत्तीत्यर्थः । तेन द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वेन न तमादाय जलादावतिव्याप्तिरेवमग्रेऽपि द्रष्टव्यम् ।

समवायेनैव विवक्षितन्तेन कालिकेन जलत्वमादाय तत्रैव न सा, पूर्वं क्षितिः पृथिवीत्येवं जातिनिर्देशेन सूचितं पृथिवीत्वस्य जातित्वं मूलोक्ततल्लक्षणघटकहेतुपदोपादानप्रयोजनप्रदर्शनेन साधयति–यद्यपीत्यादिना। प्रमाणोपन्यासायेति। यद्यपि पृथिवीत्वस्य प्रत्यक्षतया न प्रमाणान्तरापेक्षा तथापि प्रत्यक्षायोग्यपरमाण्वादिगतस्य तस्य प्रत्यक्षेण न सिद्धिरिति तत्साधारण्येन पृथिवीत्वसिद्ध्यर्थं तदुपन्यास इति भावः। कारणत्वमुपन्यस्तमिति। प्रकारविधया तद्बोधकहेतुपदम्मूल उपन्यस्तमुपात्तं न तु तत्र क्षितिर्गन्धवतीत्येवमित्यर्थः। तत्सिद्धिप्रकारमाह–तथाहीति। जातित्वसिद्धिप्रकारं प्रदर्शयतीत्यर्थः। पृथिवीत्वं हीति। हि हेताववधारण इति कोशाद्धिशब्दोऽयमेवार्थे भिन्नक्रमश्च। तथाच पृथिवीत्वङ्गन्धसमवायिकारणतावच्छेदकतयैव सिध्यति न त्वनुगतप्रतीत्या। पटादिषु तत्प्रतीतेर्विशेषज्ञजनैकनिष्ठत्वादिति भावः। गन्धसमवायिकारणतावच्छेदकतयेति। समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकतयेत्यर्थः। अन्यथा। गन्धत्वावच्छिन्नं प्रति हेतुत्वानङ्गीकारे। आकस्मिकत्वापत्तेः। अकस्माद्भवत्वापत्तेर्न्नियतकारणानियम्यत्वापत्तेरिति यावत्। तथा च कार्यमात्रवृत्तेर्गन्धत्वस्य कार्यतावच्छेदकत्वानुरोधेन तदवच्छिन्ने पृथिवीत्वेन हेतुत्वमावश्यकमिति भावः। ननु गन्धवत्त्वस्य पृथिवीलक्षणत्वे गन्धशून्ये पाषाणादावव्याप्तिरित्याश-

१ तत्रापि गन्धोत्पत्त्या गन्धरूपकार्यहेतुकानुमानेन तत्कारणतावच्छेदकपृथिवीत्वसिद्धिरिति भावः।

२ कारणे नियतत्वं जलादिव्यावृत्तत्वमेव, नियम्यत्वं कार्यतावच्छेदकधर्म्मवत्त्वम्। तथा च गन्धं प्रति पृथिवीत्वेनाकारणत्वे कदाचिज्जलादावपि तदुत्पादः स्यादिति भावः।

वाच्यम्, तत्रापि गन्धसत्त्वात्। अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते। कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते। भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति। यद्द्रव्यं यद्द्रव्य-

---

ङ्कान्निराकरोति-न चेत्यादिना। तत्रापि। पाषाणेऽपि। पृथिवीत्वेनेति शेषः। गन्धसत्त्वात्। गन्धानुमानात्। अनुमानप्रकारश्च पाषाणादिर्गन्धवान्पृथिवीत्वाद् घटादिवदिति। ननु पाषाणादौ गन्धसत्त्वेऽनुपलम्भः कथमत आह—अनुपलब्धिस्त्विति। अनुत्कटत्वेन। अनुद्भूतत्वेन। ननु पाषाणे पृथिवीत्वसत्त्व एव मानाभावेन कथन्तद्धेतुकगन्धानुमानमित्यतस्तत्साधनाय भूमिकामारचयति-कथमन्यथेत्यादिना। अन्यथा। पाषाणादौ पृथिवीत्वानङ्गीकारे। तद्भस्मनि। पाषाणभस्मनि। पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धस्तेन तत्र पृथिवीत्वमङ्गीकरणीयम्। ततश्च भस्माऽऽरम्भकावयवेष्वपि पृथिवीत्वसिद्धिस्ततश्च पाषाणारम्भकावयवेष्वपि पृथिवीत्वमङ्गीकरणीयम्, भस्मारम्भकावयवपाषाणारम्भकावयवयोरैक्यात्। एवञ्च पाषाणेऽपि पृथिवीत्वसिद्धिरित्यभिप्रायः। तदेतद्विशदयति-भस्मनो हीति। यद्द्रव्यमिति। घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय प्रथमं द्रव्यपदम्। दण्डप्रागभावध्वंसजन्ये घटे व्यभिचारवारणाय द्वितीयं द्रव्यपदम्। प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्य-

---

१ यद्यपि पाषाणे पृथिवीत्वाभावेनालक्ष्यत्वादेव तत्र गन्धवत्त्वलक्षणं नाव्याप्तमिति व्यर्थस्तत्र गन्धसाधनाय प्रयासस्तथापि वस्तुस्थितिमनुरुध्य तथोक्तमिति ध्येयम्।

२ मण्यभावजन्यवह्न्यादौ। ध्वंसत्त्वेन चेह जनकत्वं विवक्षितम् तेन प्राचाम्मते प्रतिबन्धकसंसर्गाभावत्वेन तस्य हेतुत्वेऽपि न क्षतिः

ध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः । दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वं, तथाच तस्यापि गन्धवत्त्वे बाधकाभावः । नानारूपेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते नतु जलादौ, तत्र शुक्लस्यैव सत्त्वात् । पृथिव्यां तु एकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात् । नच यत्र नानारूपं नोत्पन्नं तत्राव्याप्ति-

---

भिचारवारणायाभावपदमनुपादाय ध्वंसपदमुपात्तम् । व्याप्तिबोधार्थं दृष्टान्तमाह– दृष्टञ्चैतदिति । यद् द्रव्यं खण्डपटात्मकं द्रव्यं यद् द्रव्यध्वंसजन्यं महापटध्वंसजन्यम् । तद् खण्डपटात्मकं द्रव्यम् । तदुपादानोपादेयम् । तस्य महापटस्य यदुपादानं समवायिकारणं तन्तवः तस्योपादेयं समवेतकार्यम् । एवम् पाषाणभस्मद्रव्यं पाषाणध्वंसजन्यमिति पाषाणोपादान–( स्वपाषाणारम्भकावयव–) स्योपादेयम् । उपसंहरति– इत्थञ्चेति । बाधकाभाव इति । प्रत्युत कारणगुणाः कार्यगुणानारभन्त इति नियमस्तत्साधकः । तस्य चाग्निसंयोगवशादेवोपलब्धिर्न स्वत इति त्वन्यत् । दृष्टञ्चैतज्जलमाधुर्यादौ । नानारूपवतीति मूलेन नानारूपवत्त्वं पृथिव्या लक्षणान्तरमुक्तं तल्लक्ष्ये समन्वयति–शुक्लेत्यादिना । अलक्ष्ये लक्षणगमनासत्त्वमुपपादयति—नत्विति । पृथिव्यामेव वर्त्तत इत्यत्र हेतुमाह–पृथिव्यान्त्वित्यादिना । पाकवशेनेति । पाको नाम रूपादिपरावृत्तिजनको विजातीयतेजःसंयोगः ।

---

ध्वंसजन्यत्वञ्चादृष्टद्वारा विवक्षितम् । तेन शालग्रामशिलाध्वंसजन्ये नारकीयशरीरे न व्यभिचारः ।

रिति वाच्यम्, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात्। वैशेषिकनये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वान्न्यायनये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः। षड्विध इति। मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव। जले मधुर एव रसः। अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः। गन्धस्त्विति। द्विविध इति वस्तुस्थितिमात्रं नतु द्विविधगन्धवैलक्षण्यमेव वैजात्यम्।

रूपद्वयेति। रूपद्वयवद्वृत्तिसत्तारूपजातिमादाय गुणादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। द्रव्यत्वव्याप्यजलत्वादिमति जलादावतिव्याप्तिवारणाय वृत्त्यन्तम्। द्रव्यत्वव्याप्यजलपृथिव्यन्यतरत्वादिमादाय जलेऽतिव्याप्तिवारणाय जातीति। अपेक्षाबुद्धिविशेषविषयत्वरूपद्वित्वघटितेऽत्र लक्षणे गौरवमित्यर्थान्तरपरतया लक्षणान्तरमाह—रूपनाशेति। अत्रापि तत्तत्पदव्यावृत्तिः पूर्ववद्बोध्या। षड्विधस्तु रसस्तत्रेति मूलोक्तं रसस्य षड्विधत्वं प्रकाशयति—मधुरेत्यादिना। ननु यत्र नानारसो नोत्पन्नस्तत्राव्याप्तिरित्यत आह—अत्रापीति। ननु मूले गन्धस्तु द्विविधो मत इत्यनेन द्विविधगन्धवत्त्वं पृथिव्या लक्षणं प्रदर्शितं तच्चायुक्तं अन्यत्र गन्धाभावेन द्वैविध्यां-

१ अत्रापि वृत्तित्वं जातिमत्त्वञ्च समवायेनैव विवक्षितम् अन्यथा कालिकेन जलत्वं पृथिवीत्वञ्चादाय जलेऽतिव्याप्तिः स्यात्।

२ आदिपदेन जलपृथिव्युभयत्वस्य संग्रहः।

३ रूपनिष्ठं द्वित्वं न संख्यारूपम्। गुणे गुणानङ्गीकारात्। अपि तु रूपद्वयविषयकापेक्षाबुद्धिविषयत्वरूपन्तन्निवेशनीयमिति गौर-

वत्त्वं लक्षणं द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यं च सौरभासौरभभेदेन बोध्यम् ॥ ३९ ॥

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ।

नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥

स्पर्श इति । तस्याः पृथिव्याः । अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तं पाकज इति । इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् । वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्,

शस्य वैयर्थ्यादित्यत आह–वस्तुस्थितिमात्रमिति । वस्तुगत्या गन्धो द्विविधः पृथिव्यां तिष्ठतीति सूचयितुमुक्तं न तु लक्षणे द्वैविध्यस्यापि प्रवेश इत्यर्थः । गन्धस्य द्वैविध्यं प्रकाशयति–द्वैविध्यञ्चेति ॥ ३९ ॥

स्पर्शे अनुष्णाशीतत्वनिवेशस्य वैयर्थ्यादाह–इत्थञ्चेति। पाकजस्पर्शवत्त्वमात्रोक्तावित्यर्थः । न्यायमते पाकजस्पर्शाभाववति पटे, वैशेषिकमते पाकजस्पर्शस्य परमाणुष्वेवाङ्गीकारादवयविनि चाऽव्याप्तिमाशङ्क्य जातिघटितलक्षणेन समाधत्ते–यद्यपीत्यादिना। पटादावित्यादिना वैशेषिकमतेऽवयविमात्रपरिग्रहः । सत्तारूपजातिमादाय गगनादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वसमानाधिकरणेत्युक्तौ सत्तामादायातिव्याप्तिस्तदवस्थैवेत्यतो व्याप्यभागः । व्याप्यत्वञ्चात्र तत्समानाधिकरणत्वे सति तदधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वरूपं तदेव न्यूनवृत्तित्वं तच्चात्र पृथिवीत्व एवेति । स्पर्शसमानाधिकरणजलत्वादिकमादाय जलादावतिव्याप्तिवारणाय पाकजेति । पा-

वमतस्तदघटितं रूपनाशघटितलक्षणं प्रणिनाय नाशत्वञ्चाखण्डोपाधिरूपमेवेति न गौरवमिति भावः ।

अधिकस्य वैयर्थ्यात् । यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजाति-मत्त्वमर्थो बोध्यः । नित्येति । सा पृथिवी द्विविधा नित्या ऽनित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या ॥ ३६ ॥

अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ।

सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादि-रूपा सर्वाप्यनित्येत्यर्थः । सैवानित्या पृथिव्ये-वावयववतीत्यर्थः । ननु अवयविनि किं मानं परमाणुपुञ्जैरेवोपपत्तेः । न च परमाणूना-मतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वा-

कजद्रवत्वसमानाधिकरणतेजस्त्वमादाय तेजस्यतिव्याप्तिवार-णाय स्पर्शेति । जलपृथिव्यन्यतरत्वमादाय जलेऽतिव्याप्तिवार-णाय जातीति । अत्र च पृथिवीत्वस्य लक्ष्यतावच्छेदक-त्वाल्लक्षणत्वं न सम्भवतीति तत्परित्यागः । नित्येतीति । नित्यत्वञ्च ध्वंसाप्रतियोगित्वं । न च ध्वंससाधारणम् भावत्वे सतीतिविशेषणाद् एवमनित्यत्वं ध्वंसप्रतियोगित्वमिति ध्येयम् । अणुत्वस्य द्व्यणुकेऽपि सत्त्वादाह--परमाणुरूपेति ॥ ३६ ॥

बौद्धः शङ्कते--नन्विति अवयवसमवेतत्वेन तत्कार्यरू-पतयाऽवयविनः कस्यचिदर्थान्तरस्याभ्युपगमे किम्मानमिति प्रश्नार्थः । नन्वयं घट इत्यादिप्रतीतिरेव तत्र प्र-माणम्भविष्यत्यत आह--परमाणुपुञ्जैरेवेति । विलक्षणसं-

१ वस्तुतस्तु पृथिवीत्वजातिरपि पृथिव्या लक्षणं सम्भवतीति प्रकाशे तरङ्गिण्याञ्च व्यक्तन्तत एव द्रष्टव्यम् ॥

त् । यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम् । न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान्धान्यराशिरितिवदुपपत्तेः । मैवम् । परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायोगात् । दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात् । न च तदानीं दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वेऽपि विरोध इति वा-

---

स्थानविशिष्टैः परमाणुभिरेवेत्यर्थः । उपपत्तेरिति । अयं घट इत्यादिप्रतीतेरुपपत्तेरित्यर्थः । अत्र दृष्टान्तमाह—यथेति । तत्समूहस्य । केशसमूहस्य । अनुपपत्तिरिति । परमाणूनामनेकत्वादणुत्वाच्चेति भावः । इतिवदुपपत्तेरिति । तत्र यथा धान्यसमूहस्यैकत्वादेक इति प्रतीतिरेवं संयोगविशेषस्यैव महत्त्वात्मकतया महानिति प्रतीतिस्तथा परमाणुष्वपीति भावः । प्रत्यक्षत्वायोगादिति । तथाच स्वरूपतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वं न सम्भवतीति भावः । दूरस्थकेशस्तु स्वभावतो नातीन्द्रिय इति त्वदुक्तदृष्टान्तवैषम्यमित्याह—दूरस्थकेशस्त्विति । तस्यैवेति । एवकारो भिन्नक्रमः सन्निधाने एव तस्य ( दूरस्थकेशस्य ) प्रत्यक्षत्वादित्यर्थः । तथाच दूरत्वस्य प्रतिबन्धकत्वादेव तद्दशायामप्रत्यक्षत्वन्तस्य न तु स्वाभाविकम्परमाणुवदप्रत्यक्षत्वमिति भावः । उत्पन्नत्वादिति । यत्सत्तत्क्षणिकं दीपशिखावदिति क्षणभङ्गवादिनाम्मते परमाणूनामुत्पत्तिस्वीकारादिति भावः । अदृश्यस्य दृश्यानुपादानत्वादिति । अत्र यद्यप्युपादानपदं न कारणार्थकं सम्भवति स्वमतेऽप्यदृश्यादृष्टस्य दृष्टघटादिकारणत्वात् ।

च्यम्, अदृश्यस्य दृश्यानुपादानत्वात् । अन्यथा चक्षुरूष्मादिसंततेः कदाचिद् दृश्यत्वप्रसङ्गात । नचातितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात् । न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम् । यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्य चित्स्वभावादाचक्ष्महे । किंतु महत्त्वोद्भू-

---

नापि समवायिकारणार्थकं सम्भवति अदृष्टपरमाणौ दृष्टपरमाणुसमवायिकारणताया अन्यैरप्यनङ्गीकारात् । समवायेन परमाणौ परमाणोर्वृत्तित्वाङ्गीकारे परमाणोरेव सावयवत्वापत्त्याऽवयविनिराकरणानुपपत्तेः । नापि प्रकृत्यर्थकं प्रकृतित्वं हि दध्नो दुग्धादौ स्वजनकनाशप्रतियोगित्वम् तच्च न तेषाम्मते परमाणुषु सम्भवति क्षणभङ्गवादिनान्तेषाम्पूर्वव्यक्तित एवोत्तरोत्तरव्यक्तेरुत्पादस्यानुमततयाऽन्तरा नाशात्क्षणव्यवधानस्य तैरनङ्गीकारादिति महदसमञ्जसन्तथापि त्वन्मत इत्यादिपूरणान्नानुपपत्तिः । तन्मते पूर्वव्यक्तिमात्रस्यैवोत्तरव्यक्तिहेतुतयाऽदृष्टादेः कारणतानभ्युपगमेनोपादानपदस्य कारणमात्रार्थकत्वे क्षतिविरहादिति ध्येयम् । अन्यथा । अदृश्यस्य दृश्योत्पादकत्वे त्वयाभ्युपगते । तत्र । तादृशदहनोत्पत्तिस्थले । तदन्तःपातिभिः । अतितप्ततैलान्तःपातिभिः । स्वभावात् । कारणैरपेक्ष्यात् । उद्भूतरूपादीति । आदिनाऽऽलोकादिपरिग्रहः । त-

---

१ तथाच त्वन्मतेऽतीन्द्रियत्वं प्रत्यक्षत्वञ्च स्वाभाविकमित्यतीन्द्रियस्यैन्द्रियकपदार्थोत्पादकत्वे चक्षूरूपादौकदाचिद्दृश्यत्वमापादितमन्मते तु कारणवलात्त्र्यणुकस्य प्रत्यक्षत्वेऽपि तदभावाद्द्व्यणुकस्यातीन्द्रियत्वसम्भवाददृश्यस्य कारणत्वेऽपि न क्षतिरिति भावः ॥

तरूपादिकारणसमुदायवतो दृश्यत्वं तदभावे चादृश्यत्वं । तथाच त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं, न तु द्व्यणुकादेस्तदभावात् । न हि त्वन्मतेऽपि सम्भवतीदं परमाणोर्महत्त्वाभावात् । इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम् । तेषां चावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः । अतः क्वचिद्विश्रामो वाच्यः । यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्तिप्रसङ्गात्तस्य नि-

---

दभावे । महत्वोद्भूतरूपाद्यभावे । त्रसरेणोर्म्महत्वादिति । कारणबहुत्वाद्धि त्रसरेणोर्महत्वं द्व्यणुकत्रयेण तदुत्पत्तेः । तदभावात् । महत्त्वाभावात् । महत्त्वप्रयोजकयोः कारणबहुत्वकारणमहत्त्वयोरेकतरस्याप्यभावेन परमाणुद्वयादुत्पन्ने द्व्यणुके कथं महत्त्वं स्यादिति भावः । इदम् । अवयविप्रत्यक्षम् । एवमप्रत्यक्षत्वापत्त्याऽतिरिक्तावयविनः प्रसाध्य नित्यनिरवयवपरमाणुसाधनाय भूमिकामारचयति–इत्थं चेति । तेषाम् । अवयविनाम् । मेरुसर्षपयोरपिसाम्यप्रसङ्ग इति–अपिशब्दस्साम्यप्रसङ्ग इत्युत्तरं सम्बध्यते । तेन च द्व्यणुकस्य सावयवत्वे मेरुत्वापत्तिः समुच्चीयते । अनन्तावयवधाराकत्वस्योभयत्र तुल्यत्वादिति भावः । विश्रमो वाच्य इति । विश्रमणं विश्रमः भावे घञ् । नोदात्तोपदेशस्येति वृद्धिनिषेधः । क्वचिद्विश्राम इति पाठस्त्वपाणिनीयोऽपि कालीनादिवद्व्याकरणान्तररीत्या साधुरेव । ननु तथापि विश्रामाश्रयस्य नित्यत्वे मानाभाव इत्यत आह–यत्रत्विति । असमवेतभावकार्योत्पत्तिप्रसङ्गादिति । ध्वंसस्य त्वसमवेतस्याप्यु-

त्यत्वम् । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः । न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्, त्रसरेणुः सावयवः, चाक्षुषद्रव्यत्वात्, घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः, महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः । न चेदमप्रयोजकम्,

---

त्पत्तेरङ्गीकाराद्भावेत्युक्तम् । ननु तस्य नित्यत्वासिद्धावप्यणुत्वे किम्मानमित्यत आह–महत्परिमाणेति । तरतमशब्दो निपातसमुदायो न्यूनाधिकवाची अनुकरणश्चानितिपरमिति हि प्रत्येकं तर–तमशब्दयोः प्रत्ययानुकरणभूतयोर्न्निपातसंज्ञा तस्माद्ब्राह्मणादेराकृतिगणत्वाद्भावे ष्यञ् आदिवृद्धिः । तारतम्यन्न्यूनाधिकभावस्तस्य । चाक्षुषद्रव्यत्वादिति । अत्रात्मनि व्यभिचारवारणाय चाक्षुषपदम् । घटाभावे व्यभिचारवारणाय द्रव्यपदम् । तदवयवसिद्धौ । त्रसरेण्ववयवसिद्धौ । तदवयवसिद्धेः । द्व्यणुकावयवपरमाणुसिद्धेः । महदवयवत्वमस्तु सावयवत्वं मास्त्वित्यप्रयोजकत्वशङ्कान्निरस्यति । नचेति । इदम् । अनुपदोक्तानुमानम् । अप्रयोजकम् । व्यभिचारशङ्का-

अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् । न चैवं क्रमेण तदवयवधारापि सिद्ध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति । साचेति । सा कार्यरूपा पृथिवी त्रिधेत्यर्थः । शरीरेन्द्रियविषयभेदादित्यर्थः ॥ ३६ ॥ ३७ ॥

---

निवर्त्तकानुकूलतर्काराहितम् । अत्र हेतुमाह—अपकृष्टमहत्त्वम्प्रतीति । महदवयवत्वम्प्रतीत्यर्थः । अनेकद्रव्यत्वस्येति । स्वसमवेतसमवेतत्वसम्बन्धेन नानाद्रव्यवत्त्वस्येत्यर्थः । प्रयोजकत्वात् । कारणत्वात् । तथाचोक्तसम्बन्धेनानेकद्रव्यवत्त्वमहदवयवत्वयोः कार्यकारणभावरूपानुकूलतर्कसत्त्वान्न व्यभिचारशङ्कावसरः । तथाच वक्ष्यति तर्कः क्वचिच्छङ्कानिवर्त्तक इति । नन्वेवमेव त्रसरेणोरवयवावयवाः सावयवाः महदवयवावयवत्वात्खण्डकपालवदित्यनुमानात्परमाणोरपि सावयवत्वमस्तु तस्यापि च खण्डकपालावयवदृष्टान्तेनावयवपदान्तरक्षेपेणानुमित्या सावयवत्वमित्याशङ्कान्निराकुरुते—नचैवं क्रमेणेति । क्रमस्तूक्त एव । तदवयवधारापि, परमाण्ववयवधारापि । तदसिद्धेरिति । अवयवधाराया असिद्धेरित्यर्थः । मूलस्थदेहमिन्द्रियं विषयस्तथेत्यस्य त्रैविध्ये हेतुपरत्वं सूचयितुमर्थमाह—सा कार्यरूपेति ॥ ३७ ॥

---

१ न तु समवेतत्वसम्बन्धेन तथात्वं तदर्थः । तथा सति परमाणुसाधनानुमानस्याप्रयोजकत्वशङ्काया अनिवृत्तिरिति ध्येयम् ।

तत्र देहमुदाहरति—

योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।

विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८॥

योनिजादीति । योनिजमयोनिजं चेत्यर्थः । योनिजमपि द्विविधं, जरायुजमण्डजं च । जरायुजं मानुषादीनाम् । अण्डजं सर्पादीनाम् । अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः । उद्भिज्जास्तरुगुल्माद्याः । नारकिणां शरीरमप्ययोनि-

---

योनिजम् । शुक्रशोणितयोः परस्परमेलनजन्यं न तु यथास्थितम् कदाचित्स्वेदजस्यापि योनिद्वारा निर्गमसम्भवात् । तद्भिन्नमयोनिजम् । जरायुजमिति । गर्भवेष्टनचर्मपुटकं जरायुस्ततो जातम् । मानुषादीनामित्यत्रादिना पश्वादीनां परिग्रहः । तथाचोक्तममरेण "मृगवाद्या जरायुजा" इति । सर्पादीनामित्यादिना पक्ष्यादिपरिग्रहः । तथा चोक्तममरेण "पक्षिसर्पादयोऽण्डजा" इति । स्वेदजोद्भिज्जादिकमिति । स्वेदो घर्म्मस्ततो जाताः । उद्भिद्य भूमिं जाता उद्भिज्जाः । आदिशब्दार्थमाह–नारकिणामिति । नरकभोगाय गृहीतदेहानाम् । एषामधर्म्मविशेषसहितेभ्योऽणुभ्य एवोत्पत्तेः स्वीकारात् । एवन्देवादीनां शरीरमप्ययोनिजमेव धर्म्मविशेषसहितेभ्योऽणुभ्यस्तदुत्पत्तेरभ्युपगमा-

---

१ एषामयोनिजत्वे त्वागम एव "ब्रह्मणो मानसा मन्वादयः पुत्रा" इत्यादिः प्रमाणम् ।

जम् । नच मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्, गन्धादिमत्त्वस्यैव प्रमाणत्वात् । नच क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यम्, तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात् । नच तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यम्, क्लेदादीनां विनाशेऽपि श-

---

दिति द्रष्टव्यम् । पार्थिवत्वे । पृथिवीमयत्वे । गन्धादिमत्त्वस्यैवेति । आदिना शुक्लेतररूपपरिग्रहः । तथाच मानुषादिशीरम्पार्थिवम् गन्धवत्त्वाद्धटवत् । एवं नीलादिरूपवत्त्वात् पटवत् इत्येवमनुमितिप्रकार ऊह्यः । क्लेदोष्मादेरित्यादिना व्यूहावकाशपरिग्रहः । क्लेदः स्वेदः । ऊष्मा औष्ण्यम् । तच्च शरीरसम्बन्धेन पुष्पादौ रूपादिपरावृत्त्यानुमीयते । अनुष्णात्तदनुत्पत्तेः । आप्यत्वम् । अम्मयत्वम् । त्रिषु द्वे आप्यमम्मयमित्यमरः । आदिना तेजोमयत्वादि । सङ्करप्रसङ्गादिति । जलत्वाभाववति घटे पृथिवीत्वं पृथिवीत्वाभाववति तटाकोदके जलत्वं मानुषादिशरीरे चोभयोरैकाधिकरण्यात्सांकर्यप्रसङ्ग इत्यर्थः । तथाच पृथिवीत्वादेर्जातित्वसिद्धिर्न स्यादितिपार्थिवत्वमेव तत्र स्वीकार्यमितिभावः । विनिगमनाविरहमुद्भाव्य निराचष्टे—नचत-

---

१ तथा च नीलादिहेत्वन्तरसूचनायैवादिपदमिति भावः ।
२ व्यूहः क्रिया, अवकाशो मुखादावन्नादिगत्यप्रतिबन्धः ।

रीरत्वेन प्रत्यभिज्ञानाद्गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्। शरीरत्वं तु न जातिः, पृथिवीत्वादिना सांकर्यात्। किन्तु चेष्टाश्रयत्वम्। वृक्षादीनामपि

---

र्हीत्यादिना। शरीरत्वेनप्रत्यभिज्ञानादिति। तदेवेदं शरीरमिति ज्ञानादित्यर्थः। तथाच क्लेदादिनाशकाले गन्धादिमत्त्वेन पार्थिवत्वे साधिते तदभेदेन गृहीते क्लेदादिमत्यपि पार्थिवत्वमेव सुगृहीतम्भवतीतिभावः। ननु कथं तर्हि शरीरे पाञ्चभौतिकत्वव्यवहार इत्यत आह—तेनेति। शरीरस्य पार्थिवत्वसाधनेनेत्यर्थः। एवञ्च शरीरे पाञ्चभौतिकत्वव्यवहारो न पञ्चभूतोपादनकत्वनिबन्धनः किन्तु तज्जन्यत्वनिबन्धनस्तत्राप्येकैकस्योपादानत्वं चतुर्णान्निमितत्वमिति विवेकः[1]। साङ्कर्यादिति। पृथिवीत्वाभाववति वरुणशरीरे शरीरत्वं शरीरत्वाभाववति घटे पृथिवीत्वं मानुषशरीरे चोभयोरेकाधिकरणवृत्तित्वमित्यस्ति साङ्कर्यम्। किन्तुचेष्टेति। प्राणिनां कायपरिस्पन्दश्चेष्टा[2]। चेष्टात्वं शरीरक्रियानिष्ठो जातिविशेषश्चेष्टत इति प्रत्यक्षसिद्धः।

---

१ भेदः।

२ हिताहितप्राप्तिपरिहारार्था क्रियेतियावत्। हितत्वञ्चेष्टत्वं स्वावच्छिन्नेच्छाविषयत्वमिति यावत्। अहितत्वञ्चानिष्टत्वं स्वावच्छिन्नद्वेषविषयत्वमितियावत्। तदर्थत्वञ्च तत्प्रयोजकत्वन्तदनुकूलत्वमिति यावत्।

चेष्टासत्त्वान्नाव्याप्तिः । नच वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसंम्बन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेद्भग्नक्षतसंरोहणादिना तदनुमानात् । यदि हस्तादौ शरीरव्यवहारो

---

शरीरत्वे । तज्ज्ञापकचेष्टावत्त्वे । किम्मानमिति । वृक्षादिष्वयं चेष्टत इति लोकप्रतीत्यभावादिति भावः । आध्यात्मिकवायुः प्राणाख्यः । तत्सत्त्वस्य चेष्टावत्त्वव्याप्यत्वादितिभावः । तत्रैवेति । आध्यात्मिकवायुसम्बन्ध एवेत्यर्थः । भग्नक्षतेति । भग्नक्षतयोर्विभागविशेषविश्लिष्टावयवयोः क्रमेण संरोहणं पुनः प्रादुर्भावः । आदिना वृद्धिः स चावयवोपचयः । तदुन्नयनात् । आध्यात्मिकवायुसम्बन्धानुमानात् ॥ क्वचित्तदनुमाना-

---

१ आत्मा देहः । आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तने ऽपि चेतिधरणिः । आत्मनीत्याध्यात्मिकः शरीरान्तः सञ्चारी सचासौ वायुः ।

२ उपचय आधिक्यम् ।

३ ननु भग्नक्षतसंरोहणादिहेत्ववगतवायोः प्राणत्वे किम्मानमिति चेदुच्यते, नर्मदातीरसंजाताः सरलार्जुनपादपाः । नर्मदातोयसंस्पर्शात्प्रयान्ति परमाङ्गतिम् ॥ गुरुं हुंकृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः इत्याद्यागम एव मानमिति ॥ जीविशरीरित्वमन्तरा वृक्षस्य धर्म्मविशेषणोत्तमगतिप्राप्तिस्तथा अधर्म्मविशेषेण वृक्षरूपत्वप्राप्तिश्च न सम्भवति । जीवात्मनो भोगायतनस्य च प्राणवत्त्वं नियतमेवेति न किञ्चिदेतत् ।

न भवति तदान्त्यावयवित्वेन विशेषणीयम्। न-च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम्, तादृशे प्रमाणाभावात्। अथवा चेष्टावदन्त्यावयविवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत्। मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः। नच नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया

---

दित्येव पाठः । अन्त्यावयवित्वेन विशेषणीयमिति। अन्त्यावयवित्वे सति चेष्टाश्रयत्वमित्येवं शरीरलक्षणम्वक्तव्यमित्यर्थः। अन्त्यावयवित्वञ्चावयव्यन्तरानारम्भकत्वम्। आरम्भकत्वञ्च निमित्तकारणेतरकारणत्वम्। मृतशरीरे चेष्टाया अभावेनाव्याप्तेराह—अथवेति। घटत्वमादाय घटेऽतिव्याप्तिवारणाय चेष्टावदिति। हस्तादावतिव्याप्तिवारणायान्त्यावयवीति। पृथिवीत्वरूपतादृशजातिमति घटादावतिव्याप्तिवारणाय मात्रपदम्। द्रव्यत्वव्याप्येतिस्वरूपकथनमात्रन्न तु व्यावर्त्तकम्। ननु देवत्वजातिमादाय लक्षणसमन्वय इत्यत आह—जलीयेति।

---

१ न च हस्तत्वादिकं न जातिः पृथिवीत्वादिना सङ्कराद्वरुणहस्ते हि पृथिवीत्वाभावः। हस्तत्वाभावश्च घटादिपृथिव्यामनयोश्च मनुष्यहस्ते ऐकाधिकरण्यमिति वाच्यम्, पृथिवीत्वादिव्याप्यनानाहस्तत्वाद्यङ्गीकारात्।

देवत्वस्यापि जातित्वाभावादिति वाच्यम्. कल्पभेदे-
न नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षण-
समन्वयात् । इन्द्रियामिति । घ्राणेन्द्रियं पार्थिवमित्य-
र्थः । पार्थिवत्वं कथमिति चेदित्थम् । घ्राणेन्द्रियं पा-
र्थिवं, रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्
कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत् । नच दृष्टान्ते स्व-
कीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीरू-
पाद्यव्यञ्जकत्वस्य तदर्थत्वात् । नच नवशरा-

---

देवत्वस्यापीति । अपिना नृसिंहत्वपरिग्रहः । जातित्वाभावा-
दिति । जलत्वाभाववति मानवीयशरीरे देवत्वं देवत्वाभावव-
ति कूपस्थजले जलत्वं वरुणशरीरे चोभयोरेकाधिकरणवृत्ति-
त्वञ्चेत्येवं जलत्वादिना साङ्कर्यादितिभावः । रूपादिष्विति ।
रसगन्धस्पर्शा आदिपदार्थाः । नवशरावगन्धव्यञ्जकजले
मनसि च व्यभिचारवारणायैवकारः । तद्दाने च सक्तु-
रसस्याप्यभिव्यञ्जकत्वान्न दोषः । घ्राणेन्द्रिये गन्धत्वस्याप्याभि-
व्यञ्जकत्वाद्धेत्वप्रासिद्धिवारणायाह—रूपादिष्विति । कुङ्कुमेति ।
कुङ्कुमं काश्मीरजन्म"केशर" इति प्रसिद्धं, तस्य हि पुरातन-
त्वादिदोषेण गतगन्धस्यापि गोघृतसम्बन्धेन सुगन्धविशेषो-
ऽभिव्यज्यत इति तस्य गन्धमात्राभिव्यञ्जकत्वात्पृथिवीत्वं सिद्ध-
म् । असिद्धिरिति । हेतोरित्यादिः । ततश्च दृष्टान्ते हेतोरसि-
द्ध्या दृष्टान्तासिद्धिः । ततश्च सपक्षावृत्तिरसाधारण इति हेतोरसा-
धारण्यदोषाद्व्याप्तिग्रह एव न स्यादिति भावः । तदर्थत्वात् ।
हेतुवाक्यघटकैवकारार्थत्वात् । तथाच दृष्टान्ते स्वीयरूपादिव्य-

---

१ मध्ये इत्यपपाठः । तद्योगे षष्ठ्या एव साधुत्वादेवमेवाग्रेऽपि
ध्येयम् ।

वगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं, वायूपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात्। नच घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात्। विषय इति। उपभोगसाधनं विषयः। सर्वमेव हि का-

---

ञ्जकघृतादावसिद्धिवारणाय परकीयत्वं रूपादौ विशेषणीयमिति भावः। अनैकान्तिकत्वमिति। साधारणानैकान्तिकत्वं हेतोरित्यर्थः। ततश्च तेन साध्यवदन्यवृत्तिना हेतुना साध्यवदन्यावृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धादनुमितिर्न स्यादितिभावः। तस्य। नवशरावगन्धव्यञ्जकजलस्य। परकीयेतिविशेषणाप्रवेशे लाघवादाह—यद्वेति। तत्र। घ्राणेन्द्रियसन्निकर्षे। विशेषणादिति। तथाच घ्राणेन्द्रियं पार्थिवं द्रव्यत्वे सति रूपादिषु गन्धस्यैवाभिव्यञ्जकत्वाद्वायूपनीतसुरभिभागवत् इत्यनुमानस्वरूपं फलितम्। एवकारेण च रूपादिव्यञ्जकत्वं व्यवच्छिद्यते। इन्द्रियलक्षणस्याग्रे ( ५८ का. ) विशिष्य वक्ष्यमाणतयेह तदनुक्त्वावसरप्राप्तं विषयं लिलक्षयिषुः प्रतीकयति—विषय इतीति।

---

१ नचासिद्धिवारकविशेषणं व्यभिचारावारकत्वान्निरर्थकमिति वाच्यम्। व्यभिचारवारकविशेषणस्यवासिद्धिवारकविशेषणस्यापि हेतौ व्याप्तिज्ञानोपयोगित्वेन सार्थक्यात्।

२ न च येन नवशरावगन्धव्यञ्जकजलेन सक्तुरसो नाभिव्यञ्जितस्तत्र जलविशेषेऽनैकान्तिक इति वाच्यम्। परकीयरूपादिविषयकसाक्षात्कारस्वरूपायोग्यत्वस्य विवक्षितत्वात्। नवशरावगन्धव्यञ्जकजलेऽपि रसव्यञ्जकतावच्छेदकतावच्छेदकजलत्वस्य सत्वात्।

३ एवञ्च रूपाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वादिति हेतुवाक्यमनुसन्धेयम्।

र्यंजातमदृष्टाधीनम् । यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परम्परया वा जनयत्येव । नहि बीजप्रयोजनाभ्यां विना कस्य चिदुत्पत्तिरस्ति । तेन द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरे-

---

विषयत्वं न जातिः सामान्यादावपि तत्सत्वादतस्तल्लक्षणमाह—उपभोगेति । उपभोगसाधनत्वञ्च साक्षात्परम्परासाधरणभोगजनकत्वम् । भोगेश्च[1] सुखदुःखान्यतरसाक्षात्कारः । परमाणुरपि विषय एव । कार्यरूपपृथिव्या एव त्रिप्रकारेण विभजनात्कार्यपृथिवीविषय एव द्व्यणुकादीत्यादिना प्रदर्शित इति न तद्ग्रन्थविरोधः । अत एव तदुपभोगं साक्षात्परम्परया वा जनयत्येवेत्यनुपदं वक्ष्यते । कार्यजातमिति । जातिर्जातञ्च सामान्यमित्यमरात्कार्यसामान्यमित्यर्थः स्यात्तच्च सर्वपदेनैव कृतार्थमिति जातपदमत्र सम्पाता[2]दायातम् ।। अदृष्टाधीनमिति । स्वसमवायिसंयुक्तसंयोगसम्बन्धेन अदृष्ट[3]जन्यमित्यर्थः । यददृष्टाधीनम् । उक्तसम्बन्धेन यत्पुरुषीयादृष्टजन्यं तत् । तद् कार्यम् । तदुपभोगम् । तत्पुरुषस्योपभोगं ( सुखदुःखान्यतरसाक्षात्कारं ) जनयत्येव । सम्पादयत्येव । तेन । द्व्यणुकादिकार्यस्य तत्तत्पुरुषस्योपभोगसाधनत्वेन । नन्वेवं सर्वस्यैव विषयत्वेन शरीरेन्द्रियभेदेन पृथिव्यास्त्रैविध्यं[4] न सिध्येदित्यत आह— शरीरेन्द्रिययोर्विषयत्वेऽपीति । प्रकारान्तरेण । विषयत्वभिन्नदेहत्वा-

---

१ उपभोगो भोग इत्यनर्थान्तरम् ।

२ सम्पातः सम्भेदः । सम्भेदे च नान्यतरवैयर्थ्यं, द्वौ ब्राह्मणावित्यादौ यथा ।

३ अदृष्टन्धर्म्माधर्म्माविति वक्ष्यते ( १६१ का. )

४ विभाजकधर्म्मत्रयवत्त्वम् । परस्परासङ्कीर्णव्याप्यधर्माणामेव विभाजकत्वादिति भावः ।

न्द्रिययोर्विषयत्वेऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

जलं निरूपयति—

वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ९ ॥

वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदक-

दिना । उपन्यासः । कथनम् । शिष्यबुद्धेर्वैशद्यं देहत्वाद्यवान्तरधर्म्माविषयकत्वम् तदर्थस्तत्प्रयोजनकः । यद्यप्येतावता विभागव्याघातो न परिहृतः, तथापि प्रकृते विषयत्वस्य देहेन्द्रियातिरिक्तोपभोगसाधनत्वरूपस्य विभाजकतावच्छेदकत्वोपगमेन न विभागानुपपत्तिरिति मन्तव्यम् ॥ ३८ ॥

इति पृथिवीग्रन्थः ॥

जलत्वजातौ प्रमाणमाह— स्नेहसमवायिकारणतावच्छेदकतयेति । समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न—( जलनिष्ठ—) कारणतावच्छेदकतयेत्यर्थः । नन्वेवं जलत्वासिद्धावपि तस्य जातित्वे मानाभावः, कारणतात्वस्य जात्यवच्छिन्नत्वमेवेत्यपि नियमो न सम्भवति, आकाशनिष्ठशब्दादिकारणतायां व्यभिचारादिति चेत्सत्यम् । कारणतावच्छेदकतया धर्म्मसिद्धौ तस्य जातित्वे व्यक्त्यभेदादिरूपजातिबाधकविरहेण लाघवात्तस्य जातित्वमपीति गृहाण । नित्यवृत्तिधर्म्मस्य कार्यतावच्छेदकत्वं न स-

१ एतेन कारणतावच्छेदकीभूतं जलत्वं शीतस्पर्शवत्त्वमेव न जातिः पदार्थान्तरकल्पने गौरवादिति प्रत्युक्तम् । शीतत्वरूपजातिविशेषाणामनेकेषां कारणतावच्छेदकत्वे गौरवाल्लाघवेन शुद्धजलत्वजातेरेव कारणतावच्छेदकत्वौचित्यादिति ध्येयम् ।

तया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्तस्य च नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमादिति चेत् । न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजलत्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः । शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति । ननु शु-

म्भवत्यतिरिक्तवृत्तित्वादित्याशङ्कते–यद्यपीति । नित्यानित्यवृत्तितयेति । तथाच वक्ष्यते परमाणौ जले नित्यमन्यत्रानित्यमिष्यत इति ॥ तथा । कार्यतावच्छेदकम् । ननु यथाऽरण्यस्थदण्डादौ फलानुपधायके कारणतावच्छेदकतया दण्डत्वादिजातिरस्त्येवैवं परमाणावपि स्नेहकारणतावच्छेदकजलत्वसत्वे का क्षतिरित्यत आह–तस्य चेति । परमाणोश्चेत्यर्थः।दण्डादेः स्वरूपयोग्यतायां न कापि क्षतिस्तस्यानित्यत्वेन फलोपधायकत्वाभावात् । अस्य तु तथोपगमे कदाचित्स्नेहोत्पत्तिप्रसङ्गः । यतो ह्ययं नित्यतया सर्वदा वस्थित इति भावः । जन्यजलत्वजातेः । जन्यजलमात्र वृत्तिजातेः ! तदवच्छिन्नेति । जन्यलत्वजात्यवच्छिन्नेत्यर्थः । न त्विति । पृथिव्यादावतिव्याप्तेरिति शेषः । यदि च मूले शुक्ल इति पदं "सावधारणं सर्वं वाक्यमब्भक्षो वायुभक्ष इति" न्यायेन शुक्ल एवेत्यर्थकम् । स चात्राभास्वरो ग्राह्यः । तेन भास्वरशुक्लमात्रस्य तेजसि सत्त्वेऽपि न क्षतिरित्युच्यते, तदाऽभास्वरशुक्लमात्ररूपवत्त्वं जलस्य लक्षणम्भवत्येव । अस्तु वा यथास्थित–( शुक्लरूपवत्त्व– ) मेव लक्षणन्तस्य विलक्षणार्थपरत्वेन

१ घटादिकार्याजनके ।

क्लरूपवत्त्वं लक्षणम्। अथवा नैमित्तिकद्रवत्ववदवृत्ति-रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्व-रशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षा-

न क्षतिरित्याह—अथवेति। द्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय रूपवद्वृत्तीति। पृथिवीत्वादिजातिमति पृथिव्यादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तीति। पटत्वादिवारणाय साक्षादिति। यद्यपि साक्षाद्व्याप्यत्वं तद्व्याप्यत्वे सति तद्व्याप्याव्याप्यत्वं तथापीह सत्यन्तनिवेशो विफलः, रूपवद्वृत्तित्वनिवेशेनैव रूपत्वादीनां वारणात्। मूर्त्तत्वजात्यनभ्युपगमेनायं ग्रन्थः। तेन जलत्वस्य द्रव्यत्वव्याप्यमूर्त्तत्वव्याप्यत्वेऽपि न क्षतिः। जलघटान्यतरत्वमादाय घटेऽतिव्याप्तिवारणाय जातीति। यद्यपि च नैमित्तिकद्रवत्ववदवृत्तिद्रवत्ववद्वृत्तिजातिमत्त्वमित्येतावतैव लक्षणार्थेन सर्वं सुस्थन्तथापि मूले वर्णः शुक्ल इत्यादिना रूपघटितलक्षणस्योक्तत्वात्तदघटितलक्षणपरिष्कारे मूलविरोधः स्यादिति तथा न कृतम्॥ यद्यप्येवमपि मूले शुक्लपदस्योपात्तत्वेन तस्य चोक्तलक्षणघटकतया मूलविरोधस्तदवस्थ एव तथापि शुक्लवद्वृत्तित्वं रूपवद्वृत्तित्वं वा प्रवेशनीयमित्यत्र विनिगमकाभावेन लक्षणद्वयेऽपि मूलतात्पर्यस्य विवक्षणीयतया न मूलविरोधः। लक्षणद्वये तात्पर्यकल्पने गौरवादेकस्मिन्नेव लक्षणे रूपपदं शुक्लपदञ्चोपादाय कारिकानुसारि लक्षणान्तरमाह—अभास्वरेति। पृथिव्यामतिव्याप्तिवारणाय समानाधिकरणान्तम्। तत्र जलत्वस्य शुक्लरूपसामानाधिकरण्यादसम्भव इति शुक्लेतरेति। तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणायाभास्वरेति। वायावति-

---

१ तत्र वर्णपदस्य रूपार्थकत्वादिति भावः।

द्व्याप्यजातिमत्त्वं वा तदर्थः । तेन स्फटिकादौ नातिव्याप्तिः । रसस्पर्शाविति । जलस्य मधुर एव रसः शीत एव स्पर्शः । तिक्ताद्यवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् । तेन शर्करादौ नातिव्याप्तिः । शीततरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः । ननु शुक्लरूपमेवेति कुतः ?

---

व्याप्तिवारणाय रूपवद्वृत्तीति । पटत्वादिकमादाय पटादावतिव्याप्तिवारणाय साक्षाद्व्याप्येति । अस्य चोक्त एवार्थः । शीत एव स्पर्श इति । विशेष्यप्राधान्याच्छीत इति [1]पुँल्लिङ्गनिर्देशः । शीतमात्रस्पर्शवत्त्वं मधुरमात्ररसवत्त्वञ्च जलस्य लक्षणम् । अत्रोभयत्रैवकारोऽब्भक्षन्यायादवगन्तव्यः। मधुरमात्ररसवत्त्वमित्यस्य परिष्कृतार्थमाह—तिक्ताद्यवृत्तीति। अत्र तिक्तपदं तिक्त(रस)वदर्थकं क्वचित्तथैव पाठः । एवम्मधुरपदेऽपि । पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय तिक्ताद्यवृत्तीति । तेजस्त्वादिकमादाय तेजआदावतिव्याप्तिवारणाय मधुरवृत्तीति । शर्करात्वमादाय शर्करायामतिव्याप्तिवारणाय साक्षाद्व्याप्येति । जलशर्करान्यतरत्वमादाय तत्रैवातिव्याप्तिवारणाय जातीति । शीतमात्रस्पर्शवत्त्वमित्यस्यार्थमाह—शीतेतरेति । द्रव्यत्वरूपजातिमादायातिव्याप्तिवारणाय शीतेतरस्पर्शवदवृत्तीति । आत्मत्वादिकमादायात्मादावतिव्याप्तिवारणाय स्पर्शवद्वृत्तीति । करकात्वमादायातिव्याप्तिवारणाय साक्षाद्व्याप्येति । जलकरकान्यतरत्वमादाय

---

१ कोशे हि शीतं गुण इति नपुंसकनिर्देश एव ॥

२ शर्करायामेवः खण्डविकारे शर्करा सितेत्यमरः ।

३ साक्षाद्व्याप्येत्यस्य पूर्वम्परिष्कृतस्य द्रव्यत्वेऽपि सत्त्वात् ।

कालिन्दीजलादौ नीलिमोपलब्धेरिति चेत्। न। नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः। अथ जले माधुर्ये किं मानम्, नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। नच नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्, तस्याश्रयौपाधिकत्वात्। अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत्। न। हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्। नच हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम्, कल्पनागौरवात्।

तत्रैवातिव्याप्तिवारणाय जातीति। एवञ्जलस्य लक्षणत्रयमभिधाय यथाक्रमम्परीक्षते—नन्वित्यादिना। ननु जले नीलरूपाभावे कथन्तत्र नीलरूपप्रतीतिरत आह कालिन्दीति। आश्रयौपाधिकीति। आश्रयविशेषसंयोगरूपदोषजन्येत्यर्थः। अत एव। दोषविशेषजन्यत्वादेव। वियति। आकाशे। धवलिमा। शौक्ल्यम्। एवं जले शुक्लमात्ररूपवत्त्वं परीक्ष्य माधुर्यं परीक्षते अथेत्यादिना। तत्र। जले। तस्य। माधुर्यस्य। अन्यथा। आश्रयोपाधिकत्वाभावे। व्यञ्जकत्वादित्युत्तरं "हरीतकीभक्षणोत्तरं प्रत्यक्षेण माधुर्योपलम्भा"दिति हेतुः पूरणीयः। कल्पनागौरवादिति। अवयवरसाजन्यस्य पृथिवीरसस्याग्निसंयोगसाध्यत्वदर्शनादेतदनुरोधमात्रेण जलसंयोगस्यापि पृथिवीरसोत्पादकत्वस्वीकारेऽतिरिक्तकार्यकारणभावस्य हरीतक्यां मधुररसस्य च कल्पने गौरवादिति भावः। नन्वस्तु जले

१ करकायामेव। वर्षोपलस्तु करकेत्यमरः।

पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम् । जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः । एवं जन्यशीतस्पर्शजनकतावच्छेदकं ज-

---

मधुरो रसस्तथापि जम्बीरजलादौ प्रत्यक्षसिद्धस्याम्लरसस्यापि स्वीकारे बाधकाभाव इत्यत आह—पृथिवीत्वस्येति । अम्लादिजनकतावच्छेदकत्वादिति । यद्यपि पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्ववन्मधुरजनकतावच्छेदकत्वमप्यस्तीति तुल्यम्, तथापि हरीतक्यादिभक्षणोत्तरं जलेऽपि मधुरोपलब्धेस्तत्र ( जले ) मधुरस्वीकारस्यानुभवानुरोधेनावश्यकतया पृथिवीत्वेनेव जलत्वेनापि मधुरं प्रति हेतुत्वं कल्प्यत इति भावः । ननु जम्बीरसलिलादावम्लप्रत्यक्षाज्जलत्वेनाम्लादिरसेऽपि तुल्यवद्धेतुत्वं स्यादत आह—जम्बीररसादाविति । स्वसमवायिसंयोगेन जम्बीरगताम्लरसस्य प्रतीतिस्तद्गतजल इत्यर्थः । ननु जम्बीरगतरसस्य जले भानं जलगतरसस्य जम्बीरे भानं वेत्यत्र विनिगमकाभाव इति चेन्न । शुष्केऽपि जम्बीरे अम्लप्रतीतेस्तत्राम्लरसस्यावश्यकत्वे तस्यैव परम्परया तद्गतजले प्रतीतेः सुवचत्वात् । हरीतक्यान्तु न कदापि माधुर्यप्रतीतिरिति न तत्र परम्परया हरीतकीगतमाधुर्यस्य जले प्रतीतिरुपपादयितुं शक्येति भावः । जलत्वजातावनुमानान्तरम्प्रमाणयति—एवमिति । जन्यशीतस्पर्शजनकतावच्छेदकम् । समवायसम्बन्धावच्छिन्नजन्यशीतस्पर्शत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न(जन्यजलनिष्ठ)कारणतावच्छेदकम् । तदवच्छिन्नजनकतावच्छेदकम् । समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न( जलनिष्ठ ) कारणतावच्छेदकम् । ननु जलत्वाभावेऽपि घृष्टचन्दनादौ शै-

न्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं जलत्वं बो-ध्यम्। घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव। तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव। तत्र पाकासंभवात्। स्नेहस्तत्रेति। घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव

---

त्योत्पत्तेर्व्यभिचारेण कथं जन्यजलत्वेन तत्र हेतुत्वमत आह घृष्टेति। पूर्वं शीत एव स्पर्श इत्युक्तन्तत्साधयति। तेजः संयोगादिति। तत्र। जले। पाकासम्भवादिति। पाको नाम रूपादिपरावृत्तिजनको विलक्षणस्तेजः संयोगः। नहि शतधा ध्मायमानेऽपि जले विना द्रव्यान्तरसंयोगं रूपपरावृत्तिर्दृष्टेतिभावः। घृतादावित्यादिना तैलपरिग्रहः। जलस्यैव स्नेह इत्यनन्तरं स्वाश्रयसंयोगेन प्रतीयत इति शेषः। तेन। घृतादौ समवायेन स्नेहनिरासेन। जल एवेति। स्नेहस्यावान्तरविशेषाभावात्स नोत्कीर्त्तितः। मूले सांसिद्धिकमित्यस्य स्वाभाविकमित्यर्थः। तदवच्छिन्नजनकतावच्छेदकम्, सांसिद्धिकद्रवत्वतावच्छिन्नजनकतावच्छेदकम्। तदेव। जन्यजलत्वमेव। तदवच्छिन्नजनकता-

---

१ अत्रत्यो विशेषोऽग्रे(१०५का०)वक्ष्यते।

२ जन्यजलमात्रवृत्तिजातिरेव।

३ परमाणौ जलत्वसिध्यर्थमाह तदवच्छिन्नेति। जन्यजलत्वावच्छिन्नेत्यर्थः। अथैवंरीत्या परमाणुव्यावृत्तमाद्यद्व्यणुकजलत्वमेकं, परमाणुसाधारणं द्वितीयमिति जलत्वयोर्भेदेऽभेदग्रहः कुत इति चेत्समनियतयोग्यव्यक्तिवृत्तित्वरूपदोषबलात्तयोरभेद*ग्रह इति। एवमग्रेऽपि बोध्यम्।

---

*व्यक्तेरभेद इत्युक्तजातिभेदबाधकसत्वादिति हृदयम्।

स्नेह इति मन्तव्यम् । द्रवत्वमिति । सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः, तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्य द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

नित्यतादि प्रथमवत्किंतु देहमयोनिजम् ।

इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥४०॥

प्रथमवदिति । पृथिव्या इवेत्यर्थः । तथाहि—जलं द्विविधं नित्यमनित्यं च । परमाणुरूपं नित्यं, द्व्यणुकादिकं सर्वमनित्यमवयवसमेवतं च । अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात् । पृथिवीतो यो विशेषस्तमाह—किंत्विति । देहमयोनिजमेवेत्यर्थः । जलीयशरीरं वरुणलोके प्रसिद्धम् । इन्द्रियमिति ।

---

वच्छेदकं जलत्वमिति भावः । तैलादावित्यादिना क्षीरपरिग्रहः । घृते तु समवायसम्बन्धेन ( साक्षादेव ) नैमित्तिकद्रवत्वस्य सत्त्वात् । द्रवत्वमित्यस्यानन्तरं स्वाश्रयसंयोगेन (परम्परया) प्रतीयत इति शेषः । ननु तैले जलस्य सत्त्वे तस्य दहनानुकूल्यं न स्याज्जलस्य दहनप्रतिकूलत्वादित्यत आह–स्नेहप्रकर्षेणेति । प्रकृष्टस्नेहस्य जलस्य दहनानुकूल्यमेव । अपकृष्टस्नेहस्यैव तस्य दहनप्रतिकूलत्वादितिभावः । इति वक्ष्यत इति । स्नेहनिरूपणावसरे ( १५७ का. ) इति शेषः ॥ ३९ ॥

प्रथमवदिति मूले प्रथमाया इवेत्यर्थे "तत्र तस्येवेति" षष्ठ्यन्ताद्वतिप्रत्यय इत्यभिप्रायेणाह पृथिव्या इवेत्यर्थ इति । जलीयशरीरमिति । तच्च पार्थिवावयवैरुपष्टब्धमिति बोध्यम् ।

जलीयमित्यर्थः। तथाहि—रसनं जलीयं गन्धाद्यव्यञ्ज-कत्वे सति रसव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जको-दकवत्। रसनेन्द्रियसंनिकर्षे व्यभिचारवारणाय द्र-व्यत्वं देयम्। विषयं दर्शयति—सिन्धुहिमादिरिति। सिन्धुः समुद्रः। हिमं तुषारः। आदिपदात्सरित्का-सारकरकादिः सर्वोऽपि ग्राह्यः। नच हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, ऊष्मणा विली-नस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्। यद्द्रव्यं

नन्तु तादृशशरीरे मानाभावोऽनुपलम्भादत आह—वरुणलोके[1] इति। गन्धेति मनस्यतिव्याप्तिवारणाय सत्यन्तम्। द्रव्यत्व-न्देयमिति। रसव्यञ्जकद्रव्यत्वादित्येव हेतुवाक्यं वक्तव्यमित्य-र्थः॥ सरित्। नदी। कासारः। सरसी। करका। वर्षोपलः। आदिपदात्कूपादिपरिग्रहः। हिमकरकयोरिति। हिमन्तुषारः। करका। उक्तैव। कठिनत्वात्। कठिनस्पर्शवत्त्वात्। विलीनस्य तस्येति। सप्तम्यर्थे षष्ठी। क्वचिद्विलीनयोरित्येव पाठः। स च ऋजुरेव। विलीनताया द्रवत्वरूपाया जलत्वव्यञ्जकत्वादिति भावः। ननु विलीनता नैमित्तिकद्रवत्वमेव तदुक्तमूष्मणेति। तच्च[2] न जलत्वव्यञ्जकं सांसिद्धिकस्यैव तस्य जलत्वव्यञ्जकत्वात्। यदि च विलीने तस्मिन्नित्यस्य तस्मिन्नष्टे सतीत्यर्थस्तथापि क-रकादिनाशोत्तरं द्रव्यान्तरोत्पादात्तत्रैव द्रवत्वजलत्वयोः प्रत्य-क्षं न करकायां तस्या नष्टत्वादत आह—यद्द्रव्यमिति। तथा च करकादिनाशोत्पन्नद्रव्यान्तरे जलत्वस्य प्रत्यक्षसिद्धत्वादुक्त-व्याप्त्या करकादिषु जलत्वसिद्धिरिति भावः। ननु हिमकर-

१ अत्र च श्रुत्यादयः प्रमाणम्।
२ नैमित्तिकद्रवत्वञ्च।

यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः। अदृष्टविशेषेण द्रवत्वप्रतिरोधात्करकादीनां काठिन्यप्रत्ययस्य भ्रान्तत्वात् ॥ ४० ॥

तेजो निरूपयति—उष्णः स्पर्श इत्यादिना।

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।

नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत्॥४१॥

उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम्। नचोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम्, तत्राप्युष्णत्वस्य सत्त्वात्। किंतु तदन्तःपातिजलस्पर्शेनाभिभवादग्रहः। एवं

---

कयोः पार्थिवत्वाभावे कथं काठिन्यप्रत्यय इत्यत आह—अदृष्टविशेषेणेति। दुरदृष्टबलेनेत्यर्थः। प्रतिरोधोऽप्रत्यक्षं तथाच प्रतिबन्धकबलाद्द्रवत्वाग्रहे भ्रान्तिरूपैव काठिन्यप्रतीतिरिति भावः ॥ ४० ॥

॥ इतिजलग्रन्थः ॥

इत्थं च। उष्णत्वजातिसिद्धौ च। ननु कथन्तर्हि जन्योष्णस्पर्शसमवायिकारणभिन्नेषु परमाणुषु तेजस्त्वजातिसिद्धिरित्यत आह—तस्येति। तेजस्त्वस्येत्यर्थः। जलत्वस्येवेति। यथा च जन्यजलत्वावच्छिन्नजनकतावच्छेदकतया जलपरमाणौ जलत्वजातिसिद्धिस्तथा जन्यतेजस्त्वावच्छिन्नजनकतावच्छेदकतया तेजःपरमाणावपि तेजस्त्वजातिसिद्धिरित्यर्थः। चन्द्रकिरणादावित्यादिना रत्नकिरणादेः परिग्रहः। तत्रापि। चन्द्रकिरणादावपि। ननु तर्ह्यौष्ण्यप्रतीतिः कुतोनेत्यत आह—कि-

रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः। रूपमित्यादि। वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः। ननु तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत। न। अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात् शङ्खस्येव पित्तपीतिम्ना। वह्नेस्तु शुक्लं रूपं नाभिभूतं किंतु

---

न्त्विति। तदन्तःपातिजलस्पर्शेनेति। चन्द्रकिरणान्तःपातिजलभागशीतस्पर्शेनेत्यर्थः। ननु चक्षुरादिनिष्ठस्योष्णस्पर्शस्यकेनाप्यनभिभूतत्वात्तत्प्रत्यक्षापत्तिरत आह—चक्षुरादौ चेति। अनुद्भूतत्वादिति। प्रत्यक्षायोग्यत्वादित्यर्थः। मरकतकिरणादावित्यादिना सुवर्णादिपरिग्रहः॥ स्याद्रूपंशुक्लभास्वरमितिमूलम्। तत्र शुक्लेति स्वरूपकथनं भास्वररूप ( वत्व ) मात्रस्य लक्षणत्वेऽतिप्रसङ्गाभावात्। भास्वरत्वं जातिविशेषः। स च तेजोरूपमात्रवृत्तिः शुक्लत्वव्याप्यश्चेति॥ वैश्वानरो वह्निः। मरकतं गारुत्मतमणिः[1]। ननु रूपाविषयकद्रव्यप्रत्यक्षस्याभावाद्वैश्वानरादेश्चाक्षुषत्वानापत्तिरिति शङ्कते तद्रूपाग्रह इति॥ धर्मिणः। रूप ( स्वरूपधर्म ) वतः। अपिना तद्गतंसंख्यादिगुणानाम्परिग्रहः[2]। अन्यदीयरूपेणापीति। पार्थिवरूपेणापीत्यर्थः। मतान्तरमाह वह्नेस्त्विति। तत्सत्वादिति। तेन[3] नासम्भवं[4] इति भा-

---

१ गारुत्मतं मरकतमश्मगर्भोहरिन्मणिः॥ इत्यमरः॥

२ वैश्वानरादिगतसंख्यापरिमाणादीनां तदीयाप्रत्यक्षत्वापादने कथं प्रत्यक्षं स्याद्योग्यव्यक्तिमात्रवृत्तिगुणानाम्प्रत्यक्षत्वाभ्युपगमादितिभावः॥ ३ तत्कथनेन॥

४ अव्याप्तिस्तु नचेत्यादिना ग्रन्थेनैवानुपदं परिहरिष्यत एवेति भावः।

तदीयं शुक्लत्वमभिभूतमित्यन्ये । नैमित्तिकमिति । सुवर्णादिरूपे तेजसि तत्सत्त्वात्। नच नैमित्तिकद्रवत्वं दहनादावव्याप्तं, घृतादावतिव्याप्तं चेति वाच्यम्, पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात्। पूर्ववदिति । जलस्येवेत्यर्थः । तथाहि—तत् द्विविधं नित्यमनित्यं च। नित्यं परमाणुरूपं तदन्यदनित्यमवयवि च। तच्च त्रिधा—शरीरेन्द्रियविषयभेदात्। शरीरमयोनिजमेव । तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

अत्र यो विशेषस्तमाह—

इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः ।

इन्द्रियमिति । ननु चक्षुषस्तैजसत्वे किं मानमिति चेत्, चक्षुस्तैजसं परकीयस्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्ति-

---

वः। दहनादाविति। आदिना घनीभूतसुवर्णपरिग्रहः । पृथिव्यवृत्तीति। एतच्च घृतादिगतपृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय । जलत्वादिजातिमादायजलादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति । वायुतेजोऽन्यतरत्वमादाय वायावतिव्याप्तिवारणाय जातीति ॥ ४१ ॥

लाघवादाह- अथवेति। द्रव्यत्वन्देयमिति । स्पर्शाव्यञ्जकत्वे सति परकीयरूपव्यञ्जकद्रव्यत्वादित्येवं हेतुवाक्यं वक्तव्यमित्यर्थः। मूले वह्निस्वर्णादिरिति समस्तपाठ एव प्रामाणिकः ।

---

१ आदिना वायुत्वम्। २ आदिना वायौ।

वारणाय प्रथमं परकीयेति । घटादेःस्वीयरूप-व्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति। अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम्। चक्षुःसंनिकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्। विषयं दर्शयति—वह्नीति। ननु सुवर्णस्य तैजसत्वे किं मानमिति चेत्। न। सुवर्णं तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमा-

---

तत्र द्वन्द्वगर्भबहुव्रीहिणा द्वन्द्वान्ते'' इति न्यायसहकारेण च व-न्ह्यादिः स्वर्णादिश्चेत्यर्थः प्रतीयते। वह्निपदम्भौमसकलविषयोप-लक्षकम्। आदिपदेन चोदर्यो विषयः परिगृह्यते, स च भुक्तान्नादेः परिणामस्य ( परिपाकस्य ) हेतुरुच्यते । स्वर्णपदश्चाकरजसं-कलविषयोपलक्षकमादिपदेन च विद्युदादिदिव्यविषयः परिगृ-ह्यते। एवञ्च भौमाकरजदिव्योदर्यभेदाच्चतुर्विधो वह्नेर्विषय उप-दर्शितो भवति। अत्र सुवर्णम्पार्थिवं पीतत्वाद्गुरुत्वाच्च हरिद्राव-दित्यनुमानेन सुवर्णस्य पार्थिवविषयत्वं साधयन् वादी तस्य तैजसत्वे मानं पृच्छति नन्वित्यादिना। उत्तरयति नेति। ज-लमध्यस्थघृतादौ व्यभिचारवारणाय असतिप्रतिबन्धक इति । अग्निसंयोगासमानधिकरणद्रवत्ववति घृतादौ व्यभिचारवा-रणाय अत्यन्तानलसंयोगेसतीति । तथाच तादृशद्रवत्वस्य

---

१ द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति हि न्यायस्वरूपम्।

२ सकलपदेन खद्योतगततेजः प्रभृतिपरिग्रहः।

३ आकरः खनिस्ततो जातमाकरजं, सकलपदेन च रजतादेः परिग्रहः।

नजन्यद्रवत्वात्। यन्नैवं तन्नैवम् यथा पृथिवीति। न चाप्रयोजकं पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्यात्यन्ताग्निसंयोगनाश्यत्वात्। ननु पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत्।

---

स्वसमानाधिकरणात्यन्ताग्निसंयोगासमानकालीनत्वान्न व्यभिचारः। अनुच्छिद्यमानजन्यद्रवत्वादिति। नञ्समासगर्भबहुव्रीहिणाऽनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वादित्यर्थः। जलपरमाणौ-नित्यद्रवत्वस्य (१५५ का.) वक्ष्यमाणतया तत्र व्यभिचारवारणाय जन्येति। यन्नैवम्। यन्न तैजसम्। तद् एवमुक्तहेतुमन्न। ननु हेतुरस्तु साध्यम्मास्त्वित्यप्रयोजकत्वशङ्कामसति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः जन्यजलद्रवत्वनाशाग्निसंयोगयोश्च कार्यकारणभावरूपानुकूलतर्कप्रदर्शनेन निरस्यति नचेदमप्रयोजकमिति। इदमुपलक्षण "मग्नेरपत्यं प्रथमं हिरण्यम्"

---

१ गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सति सप्तम्याः सामानाधिकरण्यार्थकतायाः, गोषु दुह्यमानासु गत इत्यादौ तस्याः समान कालीनत्वार्थकतायाश्च क्लृप्तत्वादितिभावः।

२ अनुच्छिद्यमानं जन्यद्रवत्वं यस्मिन्नित्येवम्बहुव्रीहिः समासोऽत्र, न तु उच्छिद्यमानं जन्यद्रवत्वं यस्मिन्तदुच्छिद्यमानजन्यद्रवत्वं नोच्छिद्यमानजन्यद्रवत्वमनुच्छिद्यमानजन्यद्रवत्वन्तस्मादिति बहुव्रीहिगर्भो नञ्समासस्तथा सति उच्छिद्यमानद्रवत्वानधिकरणत्वादित्यर्थः स्यादेवञ्च गगनादौ व्यभिचारो दुरुद्धरः स्यात्।

३ अत्र (हेतौ) द्रवत्वपदस्य नैमित्तिकद्रवत्वार्थकत्वोपगमे तु जन्येति न देयमिति प्रकाशकृदभिमतम्।

४ अर्थात् हेतुः साध्यव्यभिचारी न वेति।

५ व्यभिचारशङ्कानिवर्त्तकानुकूलतर्करहितत्वशङ्काम्।

न । जलमध्यस्थमसीक्षोदवत्तस्याद्रुतत्वात् । अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपपरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते । तथाहि–अत्यन्ताग्निसंयोगिपीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानाधिकरणत्वात् । जलमध्यस्थपीतपटवत् । तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ॥

वायुं निरूपयति—

अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः॥४२॥

इत्याद्यागमानुपपत्तेरप्यनुकूलतर्कस्य सत्त्वादिति । क्षोदश्चूर्णम् । तस्य । पीतिमगुरुत्वाश्रयस्य । प्रकारान्तरेण सुवर्णस्य तैजसत्वं साधयताम्मतमुपन्यस्यति–अपरेत्वित्यादिना । तत्प्रतिबन्धकम् । रूपपरावृत्तिप्रतिबन्धकम् । अग्निसंयोगस्य तैजससुवर्णेऽपि सत्त्वात्तत्र च वक्ष्यमाणपृथिवीत्वघटितहेतोरभावेनावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया भागासिद्धिप्रसङ्गादाह पीतिमेति । साध्ये विजातीयपदमुद्देश्यासिद्ध्यर्थम् । अग्निसंयोगरहिते पूर्वरूपविजातीयरूपानाधारघटे व्यभिचारवारणाय हेतावप्यन्तम् । यथाकथञ्चिदग्निसंयुक्ते घटे व्यभिचारवारणायात्यन्तेति । जलपरमाणौ व्यभिचारवारणाय पार्थिवेति । तस्य च । तथाभूतद्रवद्द्रव्यस्य च । पृथिवीजलभिन्नस्येति । पृथिव्याः पक्षीकृतपीतिमाश्रयाया विजातीयत्वाभावात् । जलस्य च तत्रासम्भवादिति भावः । तेजस्त्वनियमादिति । वाय्वादौ रूपाभावादितिभावः ।

इति तेजोग्रन्थः ॥

तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।
पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥

अपाकज इति। अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति। अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति। तेन वायवीयो विजातीयः स्पर्शो दर्शितः। तज्जनकतावच्छेदकं वायुत्वमिति भावः। एष वायुः स्पर्शादिलिङ्गकः।

---

वायौ प्रमाणं प्रदर्शयितुमुपन्यस्तस्यापकज इत्यादिश्लोकार्द्धस्याशयं विवरिष्यँस्तत्रत्यापाकजादिपदानां क्रमेण व्यावृत्तिमाह अनुष्णेत्यादिना। यद्यप्यपाकजानुष्णाशीतस्पर्शवत्त्वं पटादावतिव्याप्तन्तथाप्यपाकजानुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वन्तदर्थोऽवसेयः। एतेन। स्पर्शस्यानुष्णाशीतत्वादिकथनेन। तज्जनकतावच्छेदकम्। विजातीयस्पर्शजनकतावच्छेदकम् ॥ ४२ ॥

---

१ द्रव्यत्वसाक्षाद्व्याप्यत्वञ्च द्रव्यत्वव्याप्यत्वे सति द्रव्यत्वव्याप्याव्याप्यत्वम्। तेन पटत्वमादाय नातिव्याप्तिरिति भावः।

२ वस्तुतस्तु यद्यपीत्यादिना दर्शिताशङ्कानिरासायैव मूले एतेनेत्यादिग्रन्थः। तथाच विजातीयस्पर्शवत्त्वस्यैव वायुलक्षणत्वे न कोऽपि दोष इति मूलाभिप्राय इति युक्तमुत्पश्यामः।

३ तथाच विजातीयस्पर्शजनकतावच्छेदकतया वायुत्वजातिसिद्धिरितिभावः। इदमुपलक्षणं भेर्यादिशब्दरूपशब्दविशेषस्य वह्नित्वावच्छिन्नस्य यः निमित्तकारणतावच्छेदकतयाऽपि वायुत्वजातिसिद्धिरिति द्रष्टव्यम्। वैजात्यं स्वसजातीयेतरवैलक्षण्यम्। इदमुपलक्षणं शब्दविशेषस्य वह्नित्वावच्छिन्नस्यवानिमित्तकारणतावच्छेदकतया वायुत्वजातिसिद्धिरित्यपि द्रष्टव्यम्।

वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते। विजातीयस्पर्शे-
न विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां क-

नुनु प्रत्यक्षस्पर्शाश्रयत्वाद् घटवद्वायोरपि प्रत्यक्षत्वेन त-
द्विषयतयैव वायुत्वसिद्धिरस्त्वलं विजातीयस्पर्शादिजनकताव-
च्छेदकतया तदनुमानेनेति चेन्न। उद्भूतरूपवत्त्वस्योपाधितया
ऽनुमित्या तत्प्रत्यक्षत्वासिद्धेरित्यभिप्रेत्यानुमित्या वायुं साध-
यति मूले स्पर्शादिलिङ्गक इति। स्पर्शादीनि लिङ्गानि यस्येति-
बहुव्रीहौ समासान्तः कप्। अत्रादिना शब्दधृतिकम्पाः। लि-
ङ्गश्चानुमापको हेतुः। तदेतद्विशदयति मुक्तावल्यामेषवायुरित्या-
दिना। विजातीयस्पर्शेनेत्यादि तृतीयान्तचतुष्कमनुमानादित्यने-
नान्वितम्। विशेष्यत्वं तृतीयार्थः। तस्य च निरूपकतास-
म्बन्धेनानुमानेऽन्वयः। तथाचायमनुमितिप्रकारः योऽयं
विजातीयः (यो रूपवद्द्रव्यासमवेतः) स्पर्शः स क्व चिदाश्रितः
स्पर्शत्वात्पृथिवीसमवेतस्पर्शवत्। पृथिव्यादिस्पर्शे सिद्धसाधन-
वारणाय विजातीय इति। एवमसति रूपवद्द्रव्याभिघाते योऽयं

१ वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवदित्यनुमानस्वरू-
पम्। २ प्रत्यक्षविषयतयैव।

३ तथाच हेतावुपाधिव्यभिचारेण साध्यव्यभिचारोन्नयनसम्भ-
वान्न प्रत्यक्षत्वसिद्धिरुपाधिश्च साध्यव्यापकत्वे सति साधनाव्या-
पकत्वं प्रकृते च यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं तत्रो-
द्भूतरूपवत्त्वमिति घटादौ साध्यव्यापकत्वम् पक्षे च साधनाव्याप-
कत्वमिति।

४ धृतिर्गुरुणो द्रव्यस्यापतनम्।

५ इदञ्च स्पर्शत्वसामानाधिकरण्येन द्रव्याश्रितत्वसाधनाभिप्रा-
येणावच्छेदकावच्छेदेन साध्यसिद्धौ सामानाधिकरण्येन सिद्धेरप्रा-
तिबन्धकत्वादेवमग्रेऽपि बोध्यम्।

पर्णादिषु विलक्षणः शब्दसन्तानः[1] स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः । अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् । पृथिव्याद्यभिघातजन्ये सिद्धसाधनवारणायासतीत्यादि पक्षविशेषणम् । विभागजन्मनि शब्दे व्यभिचारवारणाय हेतावविभज्यमानेति । एवं नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात्[2] नौकादिधृतिवत्[3] । जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति[4] । प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ व्यभिचारवारणायास्मदादीति । एवं रूपवद्द्रव्याभिघातमन्तरेण वृक्षशाखादीनां कम्पः स्पर्शवद्वेगवद्-

---

१ शब्दपरम्परा । यद्यपि वेगवद्द्रव्यसंयोगस्यैव शब्दजनकतया साध्ये स्पर्शवत्त्वविशेषणमनर्थकम् शब्दजनने स्पर्शानुपयोगात्तथापि उक्तानुमानेनैव वायोः स्पर्शस्यापि सिद्ध्यर्थन्तदुपात्तं साध्ये व्यर्थविशेषणत्वस्यादोषत्वादिति ध्येयम् ।

२ प्रयत्नवदात्मसंयोगप्रयुक्तद्रव्यधृतित्वादित्यर्थः ।

३ जलस्थद्रव्यधृतिवदित्यर्थः ।

४ इदञ्चावच्छेदकावच्छेदेन साध्यसिद्धेर्नोद्देश्यता किन्तु सामानाधिकरण्येनेत्यभिप्रायेण । अन्यथा तादृशतृणादिधृतौ साध्यस्य सिद्धावपि वायुमात्राधिष्ठिततृणादिधृतावेव साध्यस्यासिद्धतयाऽवच्छेदकावच्छेदेन साध्यसिद्ध्यभावात्तादृशानुमितौ बाधकाभावेन सामानाधिकरण्येन साध्यसिद्धेरकिञ्चित्करत्वापातात् । सामानाधिकरण्येन साध्यसिद्ध्यापि वायुसिद्धिसम्भवेनावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे प्रयोजनाभावादिति ।

५ वायुभिन्नस्पर्शवदनधिष्ठिते इति तदर्थः । नभःसंयुक्तार्थकत्वे जलस्थतृणादिव्यावर्त्तनासम्भवादिति मन्तव्यम् ।

६ परमेश्वरधृत पृथिव्यादिलोकधृत्यादावित्यर्थः ।

म्पेन च वायोरनुमानात्। यथाच वायोर्न प्रत्यक्षं तथाग्रे वक्ष्यते। पूर्ववदिति। वायुर्द्विविधो नित्योऽनित्यश्च। परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च। सोऽपि त्रिविधः–शरीरेन्द्रियविषयभेदात्। तत्र शरीरमयोनिजं पिशाचादीनाम्। परंतु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति।

---

द्रव्याभिघातजन्यः विजातीयकर्मत्वात्। नदीपूराहतकाशादिकम्पवत् इति। अग्रे वक्ष्यत इति। आत्मनिरूपणावसरे (५६, ५७,का.) इत्यर्थः। मूले पूर्ववन्नित्यताद्युक्तमिति। पूर्वस्येव पूर्ववत्। जलवदित्यर्थः। नित्यतादीत्यादिना ऽनित्यत्वपरिग्रहः। उक्तम्बोध्यमित्यर्थः। एतदेव स्पष्टयति मुक्तावल्यां वायुर्द्विविध इति। तत्र। तेषु मध्ये। अयोनिजम्। अयोनिजमेव। पिशाचादीनामिति। वायुलोके प्रसिद्धमिति शेषः। ननु वायोः करचरणाद्यभावेनाहरणविहरणाद्यभावात्कथं भोगायतनत्वमित्यत आह परन्त्विति। जलीयतैजसशरीरयोरप्येतदाक्षेपस्य तुल्यत्वात्प्रकरणलाघवमभिप्रेत्य साधारण्येन समाधानमाह जलीयतैजसवायवीयेति। ननु कथन्तर्हि जलीयत्वादिव्यपदेश इत्यत

---

१ विजातीयत्वञ्च वेगभिन्नत्वेसति चेष्टाभिन्नत्वम्।

२ पूरं प्रवाहः तदाहतत्वं तत्संयुक्तत्वम्।

३ तेजसि नित्यत्वादेः कण्ठतोऽनुक्तेस्तत्पूर्वस्यात्र पूर्वपदेन ग्रहणम्

४ यत्किञ्चिद्धर्माधर्मसहितेभ्यः परमाणुभ्य एव तदुत्पत्तेरभ्युपगमात्।

**अत्र यो विशेषस्तमाह—देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं, रूपा-**

आह जलादीनामिति । अत्र । वायौ । यो विशेषः । पूर्वस्माद्भेदः । देहव्यापीत्यस्यार्थमाह शरीरव्यापकमिति । त्वगिन्द्रियमित्यस्य च त्वचि स्थितमिन्द्रियन्त्वगिन्द्रियमित्युत्तरपदलोपी समासः शाकपार्थिवादित्वात् । त्वक्च देहस्थसप्तधात्वन्तर्गता देहसहजावरणभूता तत्स्थमेवेन्द्रियं स्पर्शङ्ग्राहयतीत्याभिप्रेत्य त्वगिन्द्रियलक्षणमाह स्पर्शग्राहकमिन्द्रियमिति । स्पर्शस्य ग्राहकमितिषष्ठीतत्पुरुषः । ग्रहधातोश्च साक्षात्कारोऽर्थः ण्वुलो जनकत्वम् । ज्ञानाद्यर्थकधातुसमभिव्याहृतकर्म्मप्रत्ययार्थौ विषयत्वं विषयित्वम्चेति स्पर्शविषयक-( स्पर्शनिष्ठविषयतानिरूपक- ) साक्षा

१ प्रकाशे तु अत्र त्वगिन्द्रिये यो विशेषोऽधिष्ठानादिरित्यर्थम्महादेव आह ।

२ त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राणि धातव इति सप्त धातवः वैद्यकप्रसिद्धाः ।

३ विषयत्वे षष्ठ्यर्थे निष्ठत्वेन स्पर्शस्यान्वयः विषयत्वस्य च निरूपकतया ग्रहधात्वर्थे साक्षात्कारे इत्ययमर्थः । अत्र चक्षुरादावतिव्याप्तिवारणाय सत्यन्तम् । त्वक्सन्निकर्षे व्यभिचारवारणाय इन्द्रियत्वमिति बोध्यम् । एव§मेव घ्राणरसनचक्षुषां लक्षणम्बोध्यम् । घ्राणादिशब्दैर*पि तदर्थं ऊहितुं शक्यं इति पूर्वं यथा वसरं तेषां लक्षणं नाक्तम् ।

§ गन्धग्राहकमिन्द्रियं घ्राणम् । रसग्राहकमिन्द्रियं रसनम् । रूपग्राहकमिन्द्रियं चक्षुरित्येवम् ।

* जिघ्रति गन्धमुपादत्तेऽनेनेति घ्राणम् । घ्राधातुर्गन्धोपादानेऽर्थे तते ल्युट् करणे । एवं रसत्यास्वादयति रसमनेनेति रसनम् । रसधातुरास्वादनेऽर्थे ततः करणे ल्युट् । नयति प्राप्नोति जानाति रूपमनेनेति नयनम् । मूले चेन्द्रियं घ्राणलक्षणम् । इन्द्रियं रसनम् ।

दिषु (मध्ये) स्पर्शस्यैवाभिव्यञ्जकत्वात्। अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२ ॥ ४३ ॥

विषयं दर्शयति—

प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।

प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधः। तस्य चतुर्थी विधा प्राणादिरित्युक्तमाकरे । तथापि संक्षेपादत्र त्रैविध्यमुक्तम्। प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नाना संज्ञां लभत इति ॥

---

त्कारजनकत्वे सतीन्द्रियत्वं त्वगिन्द्रियस्य लक्षणमित्यर्थः । अत्र त्वगित्यस्य त्वागिन्द्रियमित्यर्थः। तच्चेति त्वगिन्द्रियञ्चेत्यर्थः। पक्षे स्पर्शत्वाभिव्यञ्जकत्वादसिद्धिवारणाय रूपादिष्विति। मनसि व्यभिचारवारणायैवकारः । त्वगिन्द्रियसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीत्यपि योज्यम् । अङ्गसङ्गिसलिलं स्वेदः। ४३। आकरे। प्रशस्तपादभाष्यादौ । प्राणस्त्वेक एव यदि तर्ह्यपानादिव्यवहारः कथमित्यत आह हृदादिनानास्थानवशादिति। हृदि[2] प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः। इति हृदयादिस्था-

---

१ लक्षणवाक्ये।

२ अत्रावच्छेदकत्वं सप्तम्यर्थः । गृहीत्वाचास्य केशेष्वितिवत्। आस्यकेशावच्छेदेन गृहीत्वेति हि तदर्थः। इत्थञ्च हृन्मात्रावच्छिन्नो वायुः प्राण इत्यर्थः। यथाश्रुते व्यानस्यापि प्राणत्वापत्तिः स्यात् इति बोध्यम्।

---

इन्द्रियं नयनमित्येवं तत्र तत्राभिधानादिन्द्रियत्वघटितं तत्तल्लक्षणं सूचितमेवेति भावः।

आकाशं निरूपयति—

आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४॥

आकाशस्येति । आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न जातिः । किंतु आकाशत्वं

---

न भेदादित्यर्थः । क्रियाभेदाच्चेति । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः[1] । मलादीनामधोनयनादपानः[2] । आहारेषु पाकार्थवह्नेः समुन्नयनात्समानः[3] । ऊर्ध्वनयनादुदानः[4] । नाडीमुखेषु वितननाद्व्यान[5] इति क्रियाभेदाद्धि पञ्च संज्ञा लभते, नहि संज्ञाभेदेन संज्ञिभेदो भवतीति भावः । इति वायुग्रन्थः ॥ * ॥

आकाशेति । कालत्वं दिक्त्वं न जातिरित्यग्रे तत्तन्निरूपणावसरे वक्तव्यं तथाच न जातिरित्यस्य वारत्रयलेखने गौरवं स्यात्तस्माल्लाघवेनात्रैव प्रसङ्गाद्[6] युगपदभिदधाति—न जातिरिति । अनेकसमवेतत्वा[7]भावादिति शेषः । शब्दाश्रयत्वमिति । आश्रयता

---

१ अनप्राणन इति जीवनार्थकात् धातोर्नन्द्यादित्वात्कर्त्तरि ल्युः । उपसर्गभेदाच्चार्थभेदः । अन्तर्भावितण्यर्थश्चात्र धात्वर्थ इत्यप्येके । तत्र प्रकर्षेणानिति जीवयतीति प्राणः ।

२ अप अधः अनिति नयतीत्यपानः ।

३ अत्र समुदोऽप्यर्थद्योतयन्धात्वर्थं विशिनष्टि । समुन्नयनमुद्दीपनम् । वह्नेर्वायुसखत्वेन तत्सहकारेणैतदभिवृद्धिरिति भावः ।

४ ऊर्ध्वमनिति नयतीत्युदानः ।

५ विततनं विस्तारणमन्नरसस्येति शेषः ।

६ स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । एकहेतुकानुमितिविषयत्वेन तयोरपि स्मृतत्वादिति भावः । तथाच प्रसङ्गसङ्गत्या तदर्थाभिधानान्नार्थान्तरत्वापत्तिरिति ध्येयम् ।

७ अनेकसमवेतत्वञ्चानेकानुयोगिकसमवायप्रतियोगित्वम् । वस्तुतस्तु शेषपूरणस्यावश्यकतैव नास्ति मूले आकाशादीना-(न्तन्निष्ठ-)माकाशत्वादिकमेकव्यक्तिकत्वान्न जातिरित्यन्वयः । तत्र च ए-

शब्दाश्रयत्वम् । वैशेषिक इति कथनं तु विशेषगुणा-न्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथा-हि—शब्दो विशेषगुणः, चक्षुर्ग्रहणायोग्यबहिरिन्द्रि-

---

चात्र समवायेन विवक्षिता तेन कालस्य जगदाधारतया शब्दा-श्रयत्वेऽपि न क्षतिः । मूले वैशेषिकपदस्य वैयर्थ्यमाह–वैशेषिक इतीति । इत्थञ्च शब्द इति मूलं सावधारणं शब्द एव वैशेषि-को गुण आकाशे नान्य इति तदर्थः । वैशेषिक इति विनयादि-त्वात् स्वार्थे ठक् । विशेष एव वैशेषिकः । विशेषगुणा बुध्याद-यः पञ्चदशाग्रे ( ९०९१ का० ) नामतो निर्देक्ष्यन्ते । एतेन । विशेषगुणत्वकथनेन । प्रमाणमित्यस्य आकाश इत्यादि । त-च्च प्रमाणं "शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्र-व्यानाश्रितत्वे सति द्रव्याश्रितत्वाद्यन्नैवन्तन्नैवं यथा घट" इत्ये-वं परिशेषानुमानरूपम्बोध्यम् । दर्शितम् । सूचितम् । अत्रानुमाने हेतोः स्वरूपासिद्धिं परिहर्तुमाह–तथाहीति । घटा-दौ व्यभिचारवारणाय चक्षुर्ग्रहणायोग्येति जातिविशेषणम् । तत्त्वञ्च चक्षुर्जन्यलौकिकप्रत्यक्षस्वरूपायोग्यत्वम् । आत्मनि

---

कैव व्यक्तिराश्रयो यस्येति बहुव्रीहौ कप् प्रत्ययः समासान्तस्तस्य भावस्तत्वं तस्मादित्यर्थः । आश्रये एकत्वञ्च स्वप्रतियोगिवृत्तिद्र-व्यविभाजकोपाधिमत्त्व–स्वाश्रयत्वोभयसम्बन्धेन भेदविशिष्टोयस्त-दन्यत्वम् एतादृशविशिष्टो घटादिर्न त्वाकाशस्तदाश्रयकत्वं तदा-श्रितत्वमिति ।

१ शब्दो नेत्यारभ्येत्थञ्चेत्यतः प्राक्तनेन ग्रन्थेन तत्प्रदर्शयतीत्यर्थः।

२ चक्षुर्ग्रहणाऽयोग्यत्वञ्च । अत्र चक्षुर्ग्रहणायोग्यत्वे सतीत्येवं तरङ्गिणीसम्मतः पाठः ।

३ अन्यथा ( चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वमात्रोक्तौ ) त्वगि-न्द्रियजन्यलौकिकप्रत्यक्षविषयघटादौ व्यभिचारस्य तादवस्थ्य-मेव स्यात् । घटः शब्दावच्छेदक इति शब्दांशेऽलौकिकविषयता-

यग्राह्यजातिमत्त्वात् स्पर्शवत् । शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत्, इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपू-

---

व्यभिचारवारणाय बहिरिन्द्रियग्राह्येति। रसत्वादौ व्यभिचारवारणाय जातिमत्त्वादिति । एतच्चानुमानमग्रिमद्रव्यसमवेतत्वसाधकानुमाने हेतोः स्वरूपासिद्धिनिरासायेति बोध्यम् । गुणत्वादिति । एतदनुमानेनोक्तपरिशेषानुमाने हेतौ विशेष्यासिद्धिर्न्निरस्ता । विशेषणासिद्धिवारणयाह—शब्दो नेति । न स्पर्शवद्विशेषगुण इति । न स्पर्शवतो द्रव्यस्य पृथिव्यादिचतुष्टयस्य विशेषगुण इत्यर्थः । अग्निसंयोगेत्यादि । अग्निसंयोगः असमवायिकारणं यस्य सोऽग्निसंयोगासमवायिकारणकस्तस्य भावस्तत्त्वंतस्याभावे सतीत्यर्थः । अकारणगुणपूर्वकप्रत्यक्षत्वादिति । अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वादित्यर्थः । हेतुसत्त्वं

---

शालि चाक्षुषं प्रति शब्दस्यापि स्वरूपयोग्यतया स्वरूपासिद्धिवारणाय लौकिकत्वनिवेशः । तादृशप्रत्यक्षविषयत्वोक्तौ चक्षुःसंयोगाद्यभावेन तादृशप्रत्यक्षविषयघटादौ व्यभिचारतादवस्थ्यमतः स्वरूपयोग्यताप्रवेशः ।

१ बहिरिन्द्रियग्राह्यत्वे सति जातिमत्त्वादिति तरङ्गिणीकारः । सहि चक्षुर्ग्रहणायोग्यत्वेसतीति पाठम्मत्वा द्रव्यत्वमादाया ऽऽतमन्यतिव्याप्तिमाशङ्क्य तथा व्याचख्यौ । परं स प्रयासो विफल एव योग्यान्तस्य जातिविशेषणत्वेन द्रव्यत्वस्य चक्षुर्ग्रहणायोग्यत्वाभावेन तदापत्त्यभावात् । शब्दस्य विशेषगुणत्वेऽनुमानान्तरं प्रकाशे द्रष्टव्यम् ।

२ कारणगुणः पूर्वः कारणं यस्य स कारणगुणपूर्वको न कारणगुणपूर्वकोऽकारणगुण पूर्वकस्तस्य भावस्तत्त्वं तस्मिन्नित्यर्थः। कारणगुणाः

र्वकप्रत्यक्षत्वात् सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति । शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् । नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वात् रूपवत्। इत्थंच शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति । नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति

---

प्रतिपादयितुं–पाकजेति । बहिरिन्द्रियेति । मनसोऽन्यदिन्द्रियं बहिरिन्द्रियम्। ग्राह्यत्वात्तज्जन्यप्रत्यक्षविषयत्वात् । इत्थञ्च। अनेन प्रकारेण पृथिव्याद्यष्टद्रव्यानाश्रितत्वासिद्धौ च । सिध्यतीति। पूर्वोक्तपरिशेषानुमानेन सिध्यतीत्यर्थः। पूर्वोक्तस्पर्शवद्विशेषगुणत्वाभावसाधकानुमाने बाधं हेतुदले विशेष्यांशे स्वरूपासिद्धिश्चाशङ्कते–नचेति । वायाविति । तथाच स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वात्तदभावसाधने बाध इति भावः । कारणगुणपूर्वकत्वकथनन्त्वकारणगुणपूर्वकत्वघटितहेतोः पक्षेऽसिद्धिप्रद-

---

कार्यगुणानारभन्त इति पृथिव्यादिचतुष्टयगुणा रूपादयः कारणगुणपूर्वकास्तन्तुरूपादिना घटरूपाद्युत्पत्तेः। शब्दस्तु न तथेति भावः।

१ पाकजत्वोक्त्यैव कारणगुणजन्यत्वाभावलाभेनाकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वरूपहेतुप्रतिपत्तिः सम्भवतीति भावः।

२ नन्वाकाशे " नीलं नभ " इति चाक्षुषप्रत्यक्षमेव प्रमाणङ्किमिति नोपन्यस्तमिति चेन्न चाक्षुषत्वप्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याकाशेऽसम्भवेन चक्षुषस्तत्र प्रमाजनकत्वासम्भवात्। ननु यद्याकाशो न चाक्षुषस्तदेह पक्षीति चाक्षुषाधिकरणत्वेन किम्भासते, इति चेदालोक एवेति परिकलय।

वाच्यम् । अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वा-
भावात् ॥ ४४ ॥

तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।

इन्द्रियमिति। नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं
तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह-
एकः सन्नपीत्यादि । आकाश एक एव सन्नपि उपाधेः
कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः ॥

कालं निरूपयति—

जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥

---

र्शनार्थम् । अयावद्द्रव्यभावित्वेनेति । हेतौ तृतीया, तथाच
शब्दो न वायुविशेषगुणोऽयावद्द्रव्यभावित्वात् सुखवदित्यनुमान-
स्वरूपम्बोध्यम् । यावद्द्रव्यभावित्वञ्च स्वाश्रयनाशजन्यना-
शप्रतियोगित्वम्, तद्भिन्नत्वमयावद्द्रव्यभावित्वम् ॥ ४४ ॥

नन्वाकाशीयशरीरविषयावप्रदर्श्येन्द्रियप्रदर्शनमिन्द्रियं तु
भवेच्छ्रोत्रमित्यनेन ग्रन्थेन किमिति क्रियते इत्याशङ्कां निरस्य-
न्नवतारयति–तत्रेति। [1]तसिः भेदाद्भिन्नामित्यध्याहारस्तदाह कर्णशष्कु-
ल्यादेर्भेदाद्भिन्नमिति । चैत्राति । आकाश इत्यर्थः । उपा-
धेरिति । अवच्छेदकरूपस्येत्यर्थः । इत्थञ्च मूले उपा-
धित इति सार्वविभक्तिकः पष्ठ्यन्तात्तसिः भेदाद्भिन्नमि-
त्यध्याहारस्तदाह— कर्णशष्कुल्यादेर्भेदाद्भिन्नमिति । चैत्रा-
दिकर्णशष्कुल्यव[2]च्छिन्नमाकाशश्चैत्रादिश्रोत्रमित्येवमिति भावः ।

---

१ प्रकाशे तु उपाधित इति पञ्चम्यास्तसिरित्यभिप्रेत्य कर्णशष्कु-
लीभेदादिति तदर्थ उक्त स्तन्मते चोपाधिपदमुपाधिभेदपरम्बोध्यम् ।

२ कर्णशष्कुलीविवरावच्छिन्नम् । कर्णशष्कुलीत्युपमितस-
मासः । शष्कुलीव कर्णमिति तदर्थः ।

जन्यानामिति । तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि—इदानीं घट इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः सम्बन्धो वाच्यः । सच सबन्धः भिन्नमिति नपुंसकनिर्देशो वापुंस्याकाशविहायसीति कोशस्वरसात् ॥ इत्याकाशग्रन्थः * ॥

मूले जन्यानां जनक इति । कार्यत्वावच्छिन्नं प्रति निमित्तकारणमित्यर्थः । तथाच कालिकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तत्वं कालस्य लक्षणम् । कालिकसम्बन्धावच्छिन्नेतिकरणाद्दिशि, अधिकरणतयेतिकरणाददृष्टेश्वरयोर्नातिव्याप्तिरिति बोध्यम् । तत्र । काले । जगतामिति । कालः

---

१ अभेदे प्रकृत्यादित्वात्तृतीया, धान्येन धनवानितिवत् । तथाचोक्तं हरिणा 'प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् । अवच्छेदकताबुद्धिं प्रकारत्वादि शंसती'ति ।

२ ननु कार्यमात्रं प्रति कालस्य निमित्तकारणत्वे किम्मानमिति चेदत्राहुः । अद्य घटो भविष्यति । श्वः पटो भवितेत्यादिप्रत्यये भवतेरुत्पत्यर्थकतया तत्तत्कार्योत्पत्यधिकरणत्वेन कालो विषयीक्रियते । तदुत्पत्यधिकरणत्वेन व्यवहारविषयस्य च कपाले घट उत्पद्यत इत्यादौ नियमेन तत्तदुत्पत्तिहेतुत्वदर्शनात् । तदुत्पत्तिहेतुत्वस्य तद्धेतुत्वव्याप्यत्वात् । एवञ्च तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वे सिद्धे यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति व्याप्त्याकार्यमात्रे कालस्य हेतुतासिद्धिरिति । सा च हेतुता निमित्तकारणतैवेति सर्वं सुस्थम् । एवमेव कार्यमात्रे दिशोऽपि निमित्तकारणत्वं बोध्यम्परन्दैशिकविशेषणतासम्बन्धावच्छिन्ना तत्र कार्यता अत्र तु कालिकविशेषणतासम्बन्धावच्छिन्नेत्येतावान् विशेषः ।

३ अत्र विभिन्नकालिकयोराधाराधेयभावविरहात्क्रियादेः सर्वाधारत्वशङ्कैव नावतरतीति भावः । अयमेव चातीतादिव्यवहा-

संयोगादिर्न सम्भवतीति काल एव तत्सम्बन्धघटकः कल्प्यते । इत्थंच तस्याश्रयत्वमेव सम्यक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—

परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

परापरत्वेति । परत्वापरत्वबुद्धेरसाधारणं निमित्तं सर्ववानिति प्रतीत्या सर्वाधिकरणत्वेन कालसिद्धिरितिभावः । नन्वेतादृशी प्रतीतिर्दिग्विषयिण्येवास्तु अतिरिक्तकालकल्पने गौरवादिति न केवलया प्रतीत्या कालः सिध्यति । परन्तु प्रमाणान्तरेण काले सिद्धे प्रकृतप्रतीतिबलात्सर्वाधारत्वं कल्प्यत इत्याह इदानीमित्यादिना । सूर्यपरिस्पन्दादिकं यदाविषयीकरोतीति । इदानीमित्यस्यास्मिन् सूर्यपरिस्पन्दे इत्यर्थे सतीत्यर्थः । न सम्भवतीति । एतदनन्तरं “ स्वाश्रयतपनसंयोगिसंयोग एव सम्बन्धो वाच्यस्तत्रेतिशेषः । नचाकाशमेव तत्सम्बन्धघटकमास्तामिति वाच्यम् । आकाशदिगात्मनां विनिगमनाविरहेणातिरिक्तैककालस्य तथात्वात् । इत्थञ्चेति । अतिरिक्तैककालसिद्धौ चेत्यर्थः । सम्यगिति । कालः सर्ववानिति प्रतीतेरातिरिक्तकालविषकत्वस्योचितत्वादिति भावः ॥ ४५ ॥

परत्वापरत्वबुद्धेरिति । ज्येष्ठे परत्वबुद्धिः कनिष्ठेऽपरत्वबुद्धिः । सा च परत्वापरत्वगुणविशेषाधीना । पना । परत्वा-

---

रहेतुः । अतीतत्वं* हि वर्त्तमानध्वंसप्रतियोगित्वम् । वर्त्तमानत्वम् इह शब्दप्रयोगाधिकरणकालवृत्तित्वम् । भविष्यत्वञ्च वर्त्तमानप्रागभावप्रतियोगित्वम् । अत्र सर्वत्र कालस्य घटकतया शब्दप्रयोगरूपातीतादिव्यवहारहेतुत्वं बोध्यम् ।

---

* अतीतत्वादिकमिह द्विविधम् । कालगतं कालवृत्तिगतञ्च प्रकृते तु न कालगतातीतत्वादिकं लक्ष्यमन्यथा कालस्य घटकतयेत्युक्तिरसङ्गता स्यात् ।

काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एव कल्प्यत इति भावः। नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—क्षणादिरिति। कालस्त्वेकोऽपि उपाधिभेदात्क्षणादिव्यवहारविषयः। उ-

परत्वे च सासमवायिकारणके[1] भावकार्यत्वाद्घटवत्। असमवायिकारणञ्च तयोः कालपिण्डसंयोगस्तदाश्रयत्वेन कालसिद्धिरिति[2] भावः। बुद्धेरित्युक्त्या चैतादृशविलक्षणप्रतीत्यैव कालिकपरत्वापरत्वयोस्सिद्धिस्तादृशप्रतीतेर्दिक्कृतपरत्वादिविषयकत्वासम्भवादिति सूचितम्। ननु तथाप्याकाशदिगात्ममनोभिः पिण्डसंयोगस्य तथात्वं[3] स्यात्किं कालकल्पनयेत्यत आह--लाघवादिति। आकाशदिग्भ्यां पिण्डसंयोगस्य तथात्वे जीवात्मभिः समं प्रत्येकं विनिगमनाविरहादात्ममनसोस्त्वनन्तत्वान्न तथात्वं किन्तु लाघवादतिरिक्तः काल एव तथात्वेन कल्प्यत इति भावः। समयभेदः। समयभेदव्यवहारः[4]। न स्यादिति। एकं-

१ असमवायिकारणाभ्यां सहिते।

२ इत्थञ्च मूले असाधारणं निमित्तमित्यस्य तादृशबुद्धित्वावच्छिन्नं प्रति निमित्तकारणमिति नार्थोऽपि तु प्रयोजकमित्यर्थ उपपन्नो भवति। परत्वापरत्वबुद्धौ हि विषयविधया परत्वापरत्वं निमित्तं तत्र चासमवायिकारणतया कालपिण्डसंयोगस्तत्र च समवायिकारणविधया काल इति क्रमेण परम्परया कालस्य तद्बुद्धौ निमित्तत्वमत एव प्रयोजकत्वमिति॥ अत्र १२४ कारिकामूलोक्ताद्रष्टव्या॥ हेतौ भावपदोपादानं ध्वंसादेरसमवेतकार्यत्वविचिख्यापयिषेति ध्येयम्।

३ परत्वापरत्वासमवायिकारणत्वम्॥

४ विभिन्नव्यवहारविषयः समय इतियावत्॥

५ विरुद्धानेकधर्मावच्छिन्नबोधकत्वमेव व्यवहारगतोविरोधः॥

पाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं क-

स्मिन् विरुद्धनानाव्यवहारविषयत्वायोगादिति भावः । उपाधिभेदादिति । तथाचैकस्य कालस्य किञ्चिद्धर्म्मविशिष्टस्य क्षणत्वं किञ्चिद्धर्म्मविशिष्टस्य च दिनत्वं न तु केवलस्येति भावः । इदमुपलक्षणं तादृशोपाधीनामेव क्षणत्वादिव्यवहारविषयत्वं न तु महाकालस्येत्यपि द्रष्टव्यम् । स्वजन्येति । प्रथमं हि क्रिया, क्रियातो विभागः, विभागात्पूर्वदेशसंयोगनाशः । पूर्वदेशसंयोगनाशादुतरदेशसंयोगोत्पत्तिस्ततः प्रथमोत्पन्नक्रियानाशः । इत्येवं चतुः क्षणावस्थायिनी क्रिया भवति । अस्याञ्च प्रक्रियायां स्वं क्रिया तज्जन्यविभागप्रागभावावच्छिन्नं तत्कर्म्माद्यक्षणोपाधिः । विभाग उत्पद्य द्वितीयक्षणे संयोगं नाशयतीति विभागोत्पत्तिक्षणे संयोगोऽस्तीति पूर्वसंयोगावच्छिन्नविभागो द्वितीयक्षणोपाधिः । एवमुत्तरदेशसंयोगोत्पत्तेः प्राक् तत्प्रागभावो वर्त्तते तत्रैव च पूर्वसंयोगनाशोऽपीति पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावस्तृतीयक्षणोपाधिः । उत्तरसंयोगोत्पत्तिक्षणपर्यन्तं विभागजनककर्म्मणः स्थितेः स्वनाशकोत्तरसंयोगावच्छिन्नं क-

१ विभागप्रयोजकक्षणचतुष्टयस्थायि प्रथमोत्पन्नं कर्म्म ।

२ स्वजन्यविभागनाश्यपूर्वसंयोगाविशिष्ट स्वजन्याविभाग इत्यर्थः । तेन स्वजन्यविभागस्य यत्किञ्चित्पूर्वसंयोगविशिष्टस्य द्वित्रिक्षणवृत्तित्वेऽपि यत्किञ्चिद्विभागस्य स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्य तथात्वेऽपि न क्षतिः ।

३ स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नस्वजन्योत्तरसंयोगप्रागभाव इत्यर्थः ।

४ उत्तरसंयोगोत्तरं क्रिया न तिष्ठतीति तामादायैतदभिहितं ला-

मे वा । न चोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं, कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदा न्यत्या ध्वंसेनोपपादनीमे चतुर्थक्षणोपाधिरिति क्षणचतुष्टयोपपत्तिर्बोध्या । नन्वेतादृशक्षणलक्षणं महाप्रलयात्मकक्षणेऽव्याप्तं तत्र तादृशकर्म्माभावात् । न च महाप्रलयस्य क्षणत्वाभाव इष्ट एवेति वाच्यम् ।

तत्रापि क्षणव्यवहारस्य सत्त्वात् । अन्यथा महाप्रलयोत्पत्तौ उत्पत्तिलक्षणस्य तदधिकरणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वरूपस्याव्याप्त्यापत्तेः, तत्र महाप्रलयाधिकरणक्षणाप्रसिद्धेरत आह—महाप्रलय इति । सर्वभावकार्यध्वंसो महाप्रलयस्तत्रक्षणव्यवहारो नास्त्येव उत्पत्तिलक्षणस्य क्षणाघटितस्यैव स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृ-

---

घवेन स्वजन्यत्वस्यैव वक्तुमुचितत्वात् । स्वनाशकेत्युक्त्या च सर्वस्यैव संयोगस्योत्तरसंयोगतद्विशिष्टकर्म्मणः क्षणचतुष्टयस्थायिनः क्षणत्वापत्तिर्निरस्ता ।

१ विभागप्रागभावावच्छिन्नकर्म्माभावत्वादित्यर्थः । इदमुपलक्षणमुत्तरसंयोगप्रागभावादेरप्यसत्त्वादित्यपि बोध्यम् ।

२ तत्पदमुत्पत्स्यमानपदार्थपरम् । अधिकरणत्वमाधेयत्वञ्च कालिकेन । व्याप्यत्वञ्च दैशिकस्वरूपेण बोध्यम् । तथाच यदधिकरणक्षणावृत्तित्वस्य व्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तस्य तत्समयवृत्तित्वमुत्पत्तिरित्यर्थः ।

३ अत्र स्वपदद्वयं यत्समयवृत्तित्वमुत्पत्तित्वेनाभिमतं तत्समयव्यक्तिपरम् । कालावृत्तित्वं च तादृशकालवृत्तित्वसामान्याभावस्तेन न स्वपदेन द्वितीयक्षणाद्युपादानसम्भवः । अन्यथा द्वितीयादिक्षणवृत्तिध्वंसप्रतियोगियत्किञ्चित्पूर्वकालावृत्तित्वस्योत्पन्नघटादौ सत्त्वेन तस्य द्वितीयादिक्षणवृत्तित्वस्याप्युत्पत्तित्वप्रसङ्गात् । तादृशाभाववैशिष्ट्यं स्ववृत्तित्वे, सामानाधिकरण्यसम्बन्धेन बोध्यम् ।

य इति। दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ॥

---

त्तित्वरूपस्य तदुत्पत्तौ सम्भवादित्यभिप्रेत्योक्तं—यदीति। ध्वंसेनैवेति। स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्धर्मविशिष्टसमयस्यैव तत्र क्षणव्यवहारविषयत्वात्। दिनादिव्यवहारस्तु तत्र भवत्येव न। नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यदित्याद्यागमेषु तथा दर्शनात्। मूले क्षणादीत्यादिपदन्तु सम्पातायातमेव। नन्वेवं रीत्या क्षणव्यवहारोपपादनेऽपि सृष्टिकाले दिनादिव्यवहारः कथमत आह—दिनादिव्यवहारास्त्विति। तत्तत्क्षणकूटैरेवेति। अयं हि क्षणव्यवहारः शास्त्रकृच्छैलीपरिशीलित एतद्विषयश्च कालो निमेषादपि सूक्ष्मतम इत्यसर्वज्ञैर्दुर्ज्ञेय एव। तथापि निमेषात्मकत्वं कथञ्चिदुरीकृत्य तत्कूटैर्दिनादिव्यवहार उपपादनीयः। यथोक्तममरेण,

अष्टादशनिमेषास्तु काष्ठात्रिंशत्तु ताः कला।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्त्तो द्वादशाऽस्त्रियाम् ॥ १ ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥ २ ॥
द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनन्त्रिभिः ॥
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ॥ ३ ॥

इति कालग्रन्थः ॥ * ॥

---

१ ननु मूले महाप्रलये ध्वंसरूपसमयेनैव क्षणव्यवहार उपपादनीय इत्युक्तं तन्न सङ्गच्छते, ध्वंसस्य क्षणत्वे सृष्टिकालेऽपि ध्वंसरूपस्थूलकालस्य क्षणत्वेन व्यवहारापत्तेः। यदि च चरमध्वंसव्यक्तेरेव तद्व्यक्तित्वेन क्षणत्वं नान्यध्वंसस्येत्युच्यते तदा कुतो नान्यध्वंसस्य तद्व्यक्तित्वेन क्षणव्यवहारविषयता चरमध्वंसस्यैव तथात्वमित्यत्र बीजालाभ, इत्यतो यथा नान्यध्वंसस्य तद्व्यक्तित्वेन

दिशं निरूपयति—

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दूरान्तिकेति । दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

नन्वेकैव दिग्यादि तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह—

उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

उपाधीति । यत्पुरुषस्य उदयगिरिसंनिहिता या

वीजम् । प्रयोजकम् । दिशस्तत्र प्रयोजकत्वन्दर्शयति—दैशिकपरत्वापरत्वयोरिति । परत्वापरत्वबुद्धिं प्रति विषयविधया परत्वापरत्वे निमित्ते तत्र दिक्पिण्डसंयोगस्तत्र दिगिति क्रमेण परम्परया दिशस्तद्बुद्धौ निमित्तत्वं बोध्यम् । अत्राप्येताद्दशविलक्षणप्रतीत्यैव दैशिकपरत्वापरत्वयोः सिद्धिरित्यावेदयितुं बुद्धिपर्यन्तानुधावनं कृतम् ॥ ४६ ॥

प्राच्यादीत्यादिनाऽवाच्युदीचीप्रतीचीत्योदीनां संग्रहः । उपाधीतीति । वस्तुतो दिश एकत्वेऽपि तत्तदुपाधिभेदेन प्रा-

---

क्षणव्यवहारविषयत्वं तथा विशेषं प्रदर्शयाति स्ववृत्तीति । ताद्दशसमयश्चरमध्वंस एवेति भावः ।

१ दूरस्थे या परत्वप्रकारिका (अयं पर इति) बुद्धिः। समीपस्थे या ऽपरत्व प्रकारिका (अयमपर इति) बुद्धिस्ते प्रतीत्यर्थः ।

२ परत्वापरत्वबुद्धौ । ३ परम्परया निमित्तस्यैव च प्रयोजकत्वव्यवहारः ।

४ अत्र वायव्यैशानीत्यादिपदार्थः । ऊर्ध्वाधरे इत्यपि दिशाविति केचित् ।

दिक् सा तस्य प्राची। एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची। एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची। तद्व्यवहिता त्ववाची। 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति नियमात्॥

आत्मानं निरूपयति—

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्॥४७॥

---

च्यादिसंज्ञाभेद इति भावः। प्राच्यादिसंज्ञासु निमित्तभूतानुपाधीनाह—यत्पुरुषस्येति। पुरुषस्येति पदार्थसामान्योपलक्षणम्। पञ्चम्यर्थे षष्ठी अवधित्वञ्च[1] पञ्चम्यर्थः। दिक्। मूर्त्तम्। एवमग्रेऽपि। तथाच यदवधिकोदयगिरिसंन्निहितं यन्मूर्त्तन्तन्मूर्त्तावच्छिन्ना महती दिक् ततः प्राचीति पर्यवसितोऽर्थः। एवं यदवधिकोदयगिरिव्यवहितं यन्मूर्त्तन्तन्मूर्त्तावच्छिन्ना महती दिक् ततः प्रतीची। एवं यदवधिकमेरुगिरिसन्निहितं यन्मूर्त्तं तन्मूर्त्तावच्छिन्ना महती दिक् तत उदीची। एवं यदवधिकमेरुगिरिव्यवहितं यन्मूर्त्तं तन्मूर्त्तावच्छिन्ना महती दिक् ततोऽवाचीति। प्राच्यवाच्योर्मध्ये या ऽऽग्नेयी विदिक् साप्राच्यवाची, इत्येवमष्टौ दिश

---

१ अवधित्वं स्वरूपसम्बन्धविशेषः।

२ तदवधिकोदयगिरिसन्निहितत्वञ्च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम्। इत्थञ्च मथुरायाः प्राच्यः प्रयाग इत्यत्र मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्त्तवृत्तिः प्रयाग इत्यन्वयबोधः। एवं काशीतः प्रतीच्यां प्रयाग इत्यत्र काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगिरिसंयोगवन्मूर्त्तवृत्तिः प्रयाग इति बोधः। एवमन्यत्रापि बोध ऊहनीयः। तन्निष्ठोदयाचलसंयुक्तसंयोगपरम्पराघटकं यन्मूर्त्तन्तत्प्राचीत्येवमपि केचिद्वदन्ति।

आत्मेन्द्रियेति । आत्मत्वजातिस्तु सुखदुःखादि-
समवायिकारणतावच्छेदकतया सिध्यति । ईश्वरेऽपि

धरभेदेन च दश । आसामिन्द्रादयो देवता इत्याद्यन्यत्र व्य-
क्तम् ॥ इति दिग्ग्रन्थः ॥ * ॥

अथाकाशकालदिशामेकैकव्यक्तिकत्वादाकाशत्वादिकन्न जा-
तिरित्युक्तमधस्तादात्मनस्तु प्रतिशरीरम्भिन्नत्वात्तत्रात्मत्वजा-
तिरुररीकार्येति तत्साधयति—आत्मत्वजातिस्त्विति । तु शब्द
उक्ताकाशत्वादिव्यवच्छेदार्थः । सुखदुःखादीति । आदिना ज्ञा-
नेच्छाद्वेषप्रयत्नधर्म्माधर्म्मभावनापरिग्रहः । तथाचानुमितिः सुखा-
दिसमवायिकारणता किञ्चिद्धर्म्मावच्छिन्ना कारणतात्वात्, या
या कारणता सा सा किञ्चिद्धर्मावच्छिन्ना घटनिष्ठकार्यतानिरूपि-
तकपालनिष्ठकारणतावदिति । नन्वहं सुखीत्यादिप्रतीत्याऽत्म-
त्वेनात्मनोऽपि अहम्पदवाच्यत्वेन विषयीकरणात्प्रत्यक्षमेवा-
त्मत्वे प्रमाणं सम्भवति तत्कथमनुमित्या तत्साध्यत इति चेन्न
सकलात्मसाधारणानुगतप्रत्यक्षासम्भवेनाऽऽत्मत्वस्य स्वरूपतः
प्रत्यक्षत्वेऽपि तद्गतजातित्वस्याप्रत्यक्षत्वात् अनेकसमवेतत्व-
घटितजातित्वग्रहेऽनेकव्यक्तिग्रहहेतुत्वस्य सर्वसम्मतत्वात् । वस्तु-
तस्तु मनसि ज्ञानोत्पत्तिवारणाय ज्ञानत्वाद्यवच्छिन्नं प्रति आ-
त्मत्वेन हेतुत्वमावश्यकमिति बोध्यम् । ननु तथाप्यात्मत्व-
जातेर्भगवदात्मसाधारण्ये मानाभाव इत्यत आह—ईश्वर इति ।
“आत्मावाऽरे द्रष्टव्यः” इत्यादिश्रुतावात्मपदव्यवहारादिति

---

१ सकलात्मसाधारणम् । सकलात्मविशेष्यकम् यदनुगतप्रत्य-
क्षं सकलात्मगतैकात्मत्वप्रकारकप्रत्यक्षं तस्यासम्भवेनेत्यर्थः ।

२ तथाच सुखसमवायिकारणतावच्छेदकतया कथञ्चित्तदसि-
द्धावपि ज्ञानसमवायिकारणतावच्छेदकतयैव तत्सिद्धिरिति भावः ।

सा जातिरस्त्येव। अदृष्टादिरूपकारणाभावान्न सुख-दुःखाद्युत्पत्तिः। नित्यस्य स्वरूपयोग्यस्य फलावश्यं-भाव इत्यस्याप्रयोजकत्वात्। परे त्वीश्वरे सा जाति-र्नास्त्येव प्रमाणाभावात्। नच दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः। इन्द्रियादीति। इन्द्रि-याणां शरीरस्य च परम्परया चैतन्यसंपादकः। यद्य-

ऽध्यक्षभावः। ननु तर्हि ईश्वरे सुखाद्युत्पत्तिः कुतो न भवतीत्यत आह–अदृष्टादीति। आदिना शरीरपरिग्रहः[1]। ननु तथापि नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति नियमेनेश्वरस्य सुखादिस्वरूपयोग्यत्वे[2] कदाचित्फलोपधानापत्तिरित्यत आह नित्यस्येति। अप्रयोजकत्वादिति। जलपरमाणौ स्नेहानुत्प-त्त्या तादृशनियमे मानाभावादिति भावः। इति वदन्तीति। वेदस्थात्मपदाद्ज्ञानादिमति लक्षणापत्तिरित्यस्वरसोऽत्र। इत्या-हुरिति प्रकाशसम्मतः पाठः। अर्थे त्वभेद एव। इन्द्रियाद्यधि-ष्ठातेति मूलमात्मनि प्रमाणपरतया व्याचष्टे–इन्द्रियाणामिति। आदिपदसंग्राह्यमाह–शरीरस्येति। परम्परया। जनकतासम्ब-न्धेनावच्छेदकतासम्बन्धेन वा। चैतन्येति। चैतन्यं ज्ञानव-त्त्वम्। एतेनात्मनि प्रमाणं दर्शितम्। अचेतनं चेतनाधिष्ठितं[3]

---

१ आदिना ज्ञानपरिग्रहः। एतदापत्तिवारकशरीरस्थादिप-देन ग्रहणं सार्थकम्। ज्ञानं प्रति शरीरस्य सावच्छिन्नभोगजनका-दृष्टवत्त्वसम्बन्धेन हेतुता। तदभावादेव मुक्तस्य न ज्ञानोत्पत्ति रि-ति भावः। अदृष्टपदेनात्र धर्म उच्यते सुखं प्रति तस्यैव कारणत्वा-दिति ध्येयम्।

२ सुखादिकारणतावच्छेदकत्ववत्त्वे।

३ अधिष्ठितत्वं सहकृतत्वं तच्च स्वभिन्नत्वे सति स्वजन्यकार्योप-धायकत्वम्।

प्यात्मनि "अहं जाने अहं सुखी" इत्यादि प्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यते इत्यतः प्रमाणान्तरं दर्शयति—करणमिति। वास्या दीनां छिदाकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम्। एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारम न्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।

तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥

शरीरस्येति। ननु चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वन्मत इव मृतशरीराणामपि तदभावे का

सत् कार्यङ्करोतीति व्याप्तेः। तथाचानुमितिः। इन्द्रियाणि शरीरं च ज्ञात्राधिष्ठितं अचेतनत्वे सति उक्तान्यतरसम्बन्धेन ज्ञानवत्त्वाद्वास्यादिवदिति। अहं सुखीत्यादिनाऽहं जानाम्यहं करोमीत्यादिसंग्रहः। विप्रतिपन्नम्प्रतीति। अहमिति प्रतीतेः शरीराद्यतिरिक्तविषयकत्वे विप्रतिपन्नं प्रतीत्यर्थः। प्रथमतः। प्रमाणप्रदर्शनात्प्राक्। वास्यादीनामिति। वासी "बसूला" शब्दप्रतिपाद्यो लोहमयः शस्त्रविशेषः। कर्त्तारमन्तरेण। कर्त्तारं विना। फलानुपधानम्। फलाजननम् ॥ ४७ ॥

नैयायिकमते यथा मुक्तात्मनां ज्ञानाभवेन न ज्ञानाधिकरणत्वरूपं चैतन्यं तथा ममापि मते मृतशरीरस्य न चैतन्य-

---

१ विरुद्धवादिनं प्रति।

क्षतिः, प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेत्। न। शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्। नच पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात्। एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्। इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसा-

मिति शरीरमेवात्मेति वादी चार्वाकः शङ्कते—नन्विति चैतन्यमिति। ज्ञानादिकम्। ज्ञानाद्यधिकरणत्वम्। तदभावे। ज्ञानाद्यभावे। ननु तव मते मृतशरीरे चैतन्याभावः किन्निबन्धनः। मम मते तु प्राणविशिष्टात्मनो विरह एव तत्र प्रयोजक इत्यत आह—प्राणाभावेनेति। तथाच लाघवात्प्राणाभावश्चैतन्यविरहे प्रयोजक इति भावः। इत्येवं चार्वाकमतमुपपाद्य परिहरति—नेति। स्मरणानुपपत्तेरिति। अनुभवाश्रयस्य बाल्यशरीरस्य तदानीमभावादिति भावः। ननु बाल्ये यच्छरीरन्तदेव स्थाविरेऽप्यस्तीत्यत आह—शरीराणामिति। संस्कार उत्पद्यत इति। तथाच स्वप्रयोज्यसंस्कारवत्त्वसम्बन्धेन बाल्यशरीरसमवेतानुभवस्य स्थाविरशरीरे सत्त्वान्न स्मरणानुपपत्तिरिति भावः। अनन्तसंस्कारव्यक्तिकल्पनरूपगौरवस्य फलमुखत्वाद् दूषणान्तरमाह एवमिति। न स्यादित्यत्र हेतुमाह—इष्टेति। तद्धेतुत्वात्। प्रवृ-

१ तथाचोक्तहेतोरसिद्धिरिति भावः।

२ समवायावच्छिन्नज्ञानाधारत्वम्। कालिकादिना ज्ञानादेः कालादावपि सत्त्वात्।

३ फलमुखगौरवस्यादोषत्वादिति वक्ष्यते ( अनुमानखण्डे ६८ का० व्याख्याने )

धनतास्मारकाभावात् । मन्मते तु जन्मान्तरानुभूते- ष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः । नच ज- न्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बो- धकाभावात् । अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थंच संस्कारस्यानादितया आत्मनोऽना- दित्वसिद्धावनादिभावस्य नाशासंभवान्नित्यत्वं सि- ध्यतीति बोध्यम् । ननु चक्षुरादीनामेव ज्ञानादिकं प्र- ति करणत्वं कर्तृत्वं चास्तु विरोधे साधकाभावादत

---

त्तिहेतुत्वात् । एतच्चाग्रे ( १४७ का० ) स्फुटीभविष्यति । त- दानीम् । स्तन्यपानप्रवृत्त्यव्यवहितपूर्वकाले । ननु प्रवृत्त्यन्य- थानुपपत्तिस्तवापि समानेत्याशङ्क्य स्वमते प्रवृत्त्यन्यथानुपपत्तिं परिहरति-मन्मतेत्विति । अन्यदपीति । इष्टसाधनत्वादन्यदपी- त्यर्थः । तथाच सर्वेषां जातिस्मरत्वापत्तिरिति भावः । अत्रतु । स्तन्यपानप्रवृत्त्यनुकूलेष्टसाधनत्वस्मरणे तु । अनायत्या । अ- गत्या । अन्यथेष्टसाधनतानुभवाभावेनोद्बोधकाभावात् स्मरणा- सम्भवेन च प्रवृत्त्यसम्भवेन बालः शुष्ककण्ठो म्रियेतेतिभावः । आत्मनो नित्यत्वं साधयति-इत्थञ्चेति । स्तन्यपानप्रवृत्त्यनु- कूलेष्टसाधनतास्मरणे चेत्यर्थः । अनादेः प्रागभावस्य नाशसम्भ- वादाह-भावस्येति । नाशम्प्रति जन्यभावत्वेन हेतुत्वादात्मनो- ऽनादित्वेन जन्यभावत्वरूपहेतोरभावेन नाशासम्भवादित्यर्थः । इति चार्वाकमतखण्डनम् ॥ * ॥ करणत्वं कर्तृत्वञ्चास्त्विति । करणत्वञ्च व्यापारवत्त्वे सति कारणत्वं, भवति हि चक्षुरादौ चक्षुःसंयोगादिरूपव्यापारवति चाक्षुषज्ञानाव्यवहितपूर्वकाल- वृत्तित्वम् । कर्तृत्वञ्च यद्यपि क्रियानुकूलकृतिमत्त्वरूपमचेतने चक्षुरादौ न सम्भवति तथापि पूर्वपक्षिणातिरिक्तस्यात्मनः कृ-

आह—तथात्वमिति। चैतन्यमित्यर्थः। उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव। कथं स्मृतिः। पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्। अनुभवितुरभावात्। अन्येनानुभूतस्यान्येन स्मरणासंभवात्। अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः॥ ४८॥

---

त्यादीनामात्मसमवेतत्वस्य चानङ्गीकरणात्कृत्याश्रयत्वमपि चक्षुरादीनामस्त्वित्यर्थः। नन्वेकस्यैव करणत्वे कर्तृत्वे च कर्तृकरणादिभेदव्यवहारोऽनुपपन्न इत्यत आह—विरोध इति। विभिन्नाधिकरणवृत्तित्व इत्यर्थः। तथाच कर्तृत्वकरणत्वादिलक्षणोपाधेर्भेदात्कर्तृकरणादिव्यवहारभेदोपपत्तिरितिभावः। मूले उपघाते कथं स्मृतिरित्युक्तन्तत्रोपघातः केषामित्याकाङ्क्षायाः सत्त्वादाह—अर्थादिति। तथाचैकमेवेन्द्रियाणामितिपदं काकाक्षिगोलकन्यायेनोभयत्रान्वेतीति भावः। कथं स्मृतिरिति मूलेनेन्द्रियाणां चैतन्यपक्षे चक्षुराद्यभावे तदनुभूतस्य वस्तुनः स्मृत्यभाव आपादितः, तत्र हेतोरनुक्तेः स्वयं हेतुं पूरयन्नर्थमाह—पूर्वंचक्षुषेति। नन्विन्द्रियान्तरेणैव स्मृतिर्भविष्यतीत्यत आह—अन्येनानुभूतस्येति। अन्यदृष्टस्येति क्वचित्पाठः। तत्र दृशेरनुभवार्थकत्वकल्पना क्लिष्टा भवति। अत्र हेतुमाह—अनुभवेति। सामानाधिकरण्येनेति। समवायघटितसामानाधिकरण्यप्रत्यासत्येत्यर्थः॥ ४८॥

इतीन्द्रियचैतन्यवादिमतखण्डनम्॥ *॥

---

१ भेदो वैलक्षण्यम्। तदपि विभिन्नप्रवृत्तिनिमित्तकत्वमेव।

२ तथात्वमित्यत्रोपघात इत्यत्र च।

३ समवायेन तद्विषयकानुभवं प्रति समवायेन तद्विषयकस्मरणं कारणमिति कार्यकारणभावः।

ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह—

मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥४९॥

मनोऽपीति । न तथा न चेतनम् । ज्ञानाद्यनध्यक्षं तदा भवेत् मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तेरित्यर्थः । यथा मनसोऽणुत्वं तथाग्रे वक्ष्यते । नन्वस्तु विज्ञानमेवात्मा तस्य स्वतः प्रकाशरूपत्वाच्चेतनत्वम् । ज्ञानसुखादिकं तु तस्यैवाकारविशेषः ।

---

नित्यस्येति । तथाचेन्द्रियाणां चैतन्यपक्षेऽभिहितदोषस्यात्र नावसर इति भावः । ज्ञानादीनीति । मनसश्चैतन्ये ज्ञानादेरप्रत्यक्षं स्यादित्यर्थः । अत्र हेतुमाह—मनस इति । तत्प्रत्यक्षानुपपत्तिः । ज्ञानादिप्रत्यक्षानुपपत्तिः । ननु मनसोऽणुत्वमेवासिद्धमत आह—यथाचेति । अग्रे । ( ८९ का ) मनोनिरूपणे । अथ विज्ञानवादी शङ्कते—नन्वस्त्विवति । विज्ञानमेवेति । आत्मनिरूपणस्य प्रस्तुतत्वादात्मेत्युक्तम् । वस्तुमात्रस्यैव तन्मते विज्ञानरूपत्वादिति बोध्यम् । तस्य । विज्ञानस्य । ननु सुषुप्तावात्मा न सिध्येत्पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नाशाद्वि-

---

१ शब्दार्थज्ञानानां मतान्तरेऽप्येकाकारत्वमस्त्येव, अयं कः शब्द इति शब्दे पृष्टे घट इत्याह । अयङ्कोऽर्थ इति अर्थे पृष्टे घट इति । इदन्दृष्ट्वा ते किमाकारकं ज्ञानं जातमिति पृष्टे घट इति । ततश्च विज्ञानमेव जगदित्यवसीयते इति हि तन्मतम्, तत्र विज्ञानं द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति । तत्रायं घट इत्यादिप्रवृत्तिविज्ञानम् अहमित्याकारकज्ञानमालयविज्ञानन्तदेवात्मा ।

तस्यापि भावत्वादेव क्षणिकत्वम् । पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात्सुषुप्तावप्यालयविज्ञानधारा निराबाधैव । मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेत्। न । तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः। यत्किंचिद्विषयकत्वे विनिगमनाविरहः । सुषुप्तावपि विषयावभासप्रसङ्गाच्च, ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्ततिरनुवर्तेत इति चेत्। न। तस्याः [२]प्रकाशत्वे प्रमाणाभावात्।अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावा

---

ज्ञानान्तरस्य च तदानीमुत्पादकाभावादत आह—पूर्वपूर्वेति। ननु विज्ञानस्य क्षणिकत्वेन तदाश्रितसंस्कारस्यापि क्षणिकत्वात्कालान्तरे स्मरणं न स्यादित्याशङ्कांपरिहरति—मृगमदेति । विज्ञानस्य जगद्विषयकत्वं यत्किञ्चिद्विषयकत्वं ( नियतैकविषयकत्वं ) वाभिप्रेतमिति विकल्प्य दूषयति—नेति । आत्मस्वरूपविज्ञानस्य सविषयकत्वे दूषणमाह—सुषुप्तावपीति । तदानीन्तनालयविज्ञानस्य स्वमात्रविषयत्वोपगमेऽपि तस्यैव तदानीमभानप्रसङ्ग इति भावः। शङ्कते तदानीमिति। निराकारा । निर्विषया। चित्सन्ततिः विज्ञानपरंपरा। तस्याः। चित्सन्ततेः। प्रकाशत्वे। ज्ञानत्वे। प्रमाणाभावादिति। ज्ञानत्वस्य विषयिताव्याप्यत्वादिति भावः। अन्यथा । प्रमाणाभावेऽपि तत्र ज्ञानत्व-

---

१ पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगरूपकारणाभावादित्यर्थः ।
२ विषयितात्मकज्ञानव्यापकाभावेऽपि ।

दिति वाच्यं घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्। आकारविशेष एवायं विज्ञानस्येति चेत्; किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन। नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्। स्वरूपतो विज्ञानस्याविशेषात्। अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेत्। न। नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्। इतरथा विरोधावधारणस्यैव दुरुपपादत्वात्। न वा वासनासंक्रमः सम्भवति, मातृपुत्रयोरपि वा-

स्वीकारे। आकारस्य विज्ञानातिरिक्तत्वमनतिरिक्तत्वं वेति विकल्प्याद्ये दूषणमाह—तर्हि सामायातमिति। द्वितीयेत्वाह—समूहालम्बन इति। नीलपीते इति समूहालम्बने इत्यर्थः। स्यादिति। तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति भावः। स्वरूपतो विज्ञानस्येति। विज्ञानस्वरूपस्येत्यर्थः। अविशेपात्। एकत्वात्। ननु नीलाकारः पीताकारश्चाभिन्न एव। भेदप्रतीतिस्तु तद्धर्म्मयोर्न्नीलत्वपीतत्वयोर्भेदाद्, न च तयोरपि विज्ञानस्वरूपत्वादभेदः नीलत्वादेरपारमार्थिकस्य पारमार्थिकविज्ञानेनाभेदासम्भवादित्यभिप्रायवान् शङ्कते—अपोहरूप इति। अनीलव्यावृत्तिरूप इत्यर्थः। इतरथा। विरुद्धनीलत्वादीनामेकत्रसमावेशे। ननु समूहालम्बने नीलाकारो न वा पीताकारोऽभ्युपेयते किन्तु चित्राकार एवेति नोक्तदोष इति वासनासंक्रमं

---

१ नीलरूपाकारात्मकविज्ञानाभिन्नस्यपीताकारस्य नीलाभिन्नत्वनियमात्।

२ एकाधिकरणवृत्तित्वेनावधारणे। तेनैकाधिकरणवृत्तीनामपि तथात्वेनाप्रतीतिदशायां भ्रमात्मकविरोधावधारणेऽपि नासङ्गतिः।

सनासंक्रमप्रसङ्गात् । न चोपादानोपादेयभावो नियामक इति वाच्यं, वासनायाः संक्रमासंभवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेत् । न । तदुत्पादकाभावात् । चितामेवोत्पादकत्वे तदानन्त्यप्र-

---

मुख्यतया दूषयति–नचेति । मातृपुत्रयोरपीति । मात्राऽनुभूतस्य गर्भस्थेन तनयेनापि स्मरणप्रसङ्गादिति भावः । उपादानेन ( असहकृतकारणेन ) अनुभूतमुपादेयेन ( तत्कार्येण ) स्मर्यत इत्यपि निरस्यति–नचेति । शङ्कते–उत्तरस्मिन्निति । तदुत्पादकेति । वासनोत्पादकेत्यर्थः । चितामेवेति उत्तरविज्ञानानामित्यर्थः । उत्पादकत्व इति । अस्य संस्कारेत्यादिः । तदानन्त्यप्रसङ्ग इति । तेषामानन्त्यात्संस्कारानन्त्यापत्तिरित्यर्थः । शङ्कते–क्षणिकेति । अतिशयविशेषः । शक्तिविशेषः । उत्तरोत्तरविज्ञानानुकूलतयेति शेषः । अयम्भावः । ज्ञानव्यक्तीनां संस्कारज्ञानोभयजनकत्वे प्रति ज्ञानं विभिन्नसंस्कारव्यक्तिकल्पना गौरवेऽपि यादृशज्ञानस्य व्यक्त्युत्तरं स्मरणमनुभवसिद्धं तज्ज्ञाननिष्ठसंस्कारानुकूला काचिच्छक्तिः कल्पनीया, नतु सर्वे ज्ञानव्यक्तावतिशयः कल्प्यते तेन न संस्करानन्त्यमिति ।

---

१ उत्तरव्यक्तौ पूर्वव्यक्तिमात्रस्यैव तत्कारणत्वाङ्गीकाराद्भवत्युत्तरव्यक्तौ पूर्वव्यक्तेरुपादानत्वम् माता च पुत्रं प्रति नासहकृतं कारणं शुक्रशोणितादेरपि पुत्रकारणत्वात् । समवायिकारणत्वन्तु नात्रोपादानत्वं विभिन्नकालिकयोः क्षणिकज्ञानव्यक्त्योर्म्मध्ये एकव्यक्ति प्रत्यपरव्यक्तेरुक्तसमवायिकारणत्वासम्भवात् ।

२ उत्तरविज्ञानानाम् ।

३ इदमुपलक्षणम् तत्तदतिशयं प्रति पूर्वकालिकज्ञानव्यक्तीनां कारणताकल्पनेनापि गौरवं बोध्यम् ।

सङ्गः। क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेत्। न। मानाभावात्कल्पनागौरवाच्च। एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तं गौरवादतिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनाच्च॥ अस्तु तर्हि क्षणिकविज्ञानपक्षे गौरवान्नित्यविज्ञा-

---

गौरवादिति। क्षणिकानन्तव्यक्तितत्प्रागभावध्वंसकल्पने गौरवादित्यर्थः। ननु प्रामाणिकं गौरवं न दोषायेति चेन्न, सएवायमिति प्रत्यभिज्ञानेनाभेदस्यैवानुभवसिद्धतया विभिन्नव्यक्तीनां प्रामाणिकताचिन्तायाः सुदूरपराहतत्वात्। ननु क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्न कुशूलस्थबीजादतोऽङ्कुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन हेतुत्वमङ्गीक्रियते कुर्वद्रूपत्वञ्चाङ्कुरजनकतावच्छेदकतया सिद्धो जातिविशेषः स च फलोपधायकक्षणिकसमर्थबीजमात्रवृत्तिबीजत्वव्याप्यः कल्प्यते। एवमत्रापि कुर्वद्रूपत्वेनैव क्षणिकशरीरेषूत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं वाच्यमत आह बीजादाविति। उपपत्तेः। कस्माच्चिद्बीजादङ्कुरोत्पत्तिः कस्माच्चिन्नेति नियमोपपत्तेः। कुर्वद्रूपत्वाकल्पनादिति। कुशूलस्थबीजादिषु धरणिसलिलसंयोगादिरूपसहकारिकारणाभावादेवाङ्कुरानुपपत्तेः कुर्वद्रूपत्वं तद्रूपेण जनकत्वञ्च न कल्प्यते प्रमाणाभावादिति भावः। इतिक्षणिकविज्ञानवादिमतखण्डनम्॥ * ॥ वेदान्ती शङ्कते अस्तु तर्हीति। क्षणिकविज्ञानपक्ष इति। आत्मनः क्षणिकविज्ञानस्वरूपत्वपक्ष इत्यर्थः। आत्ममात्रस्य नित्यविज्ञान-

---

१ मृत्तिकादिनिर्म्मितं धान्यादिस्थापनार्थं स्थानं कुशूलम्।
२ अङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिजातिरित्यर्थः।

नमेवात्मा "अविनाशी वाऽरेऽयमात्मा" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेरिति चेत्। न। तस्य सविषयत्वासम्भवस्य दर्शितत्वान्निर्विषयस्य ज्ञानत्वे मानाभावात्, सविषयत्वस्याप्यनुभवात्। अतो विज्ञानादिभिन्नो नित्य आत्मेति सिद्धम्। सत्यं ज्ञानमिति हि ब्रह्मपरं, जीवेषु नोपयुज्यते। ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वर-

रूपत्वमुतेश्वरस्यैवेति विकल्प्याद्ये दूषणमाह—तस्येत्यादिनेश्वरोपीत्यतः प्राक्तनेन श्रूयत इत्यनेन ग्रन्थसन्दर्भेण। दर्शितत्वादिति। तस्य जगद्विषयकत्व इत्यादिग्रन्थेनेत्यादिः। तथा च जीवस्य तथात्वासम्भवान्नात्ममात्रस्य नित्यज्ञानस्वरूपत्वमिति भावः। ननु जीवस्य न जगद्विषयकत्वं नवा नियतैकविषयकत्वं ब्रूमः, किन्तु यद्विषयकत्वं यत्र जीवेऽनुभवसिद्धं तत्र तद्विषयकत्वमत आह—सविषयकत्वस्यापीति। स्वसिद्धान्तमुपसंहरन्परोक्तश्रुतीः समर्थयति—अत इत्यादिना। ननु सत्यं ज्ञानमिति श्रुतिरेव जीवस्य ज्ञानस्वरूपत्वे प्रमाणमत आह—सत्यमिति। ननु जीवब्रह्मणोरैक्यान्नित्यविज्ञानस्वरूपत्वं जीवस्य निराबाधमित्यतो जीवब्रह्मणोर्भेदं साधयति—ज्ञानाज्ञानेति। सुखित्वादीत्यादिना दुःखित्वपरिग्रहः। सुतरामिति। जीवात्मनां नानात्वसिद्धावीश्वरस्यैकस्यानेकजीवात्मकत्वासम्भवादेकत्वानेकत्वयोर्विरोधादितिभावः। ईश्वरभेदः। ईश्वरजीवात्मनोर्भेदः। सिध्यतीति शेषः। नन्वेकस्मिन्नेव ब्रह्मणि जीवोपाधीनामनन्ततत्तदन्तःकरणावच्छेदेन विलक्षणसुखित्वदुःखित्वाद्यनेकानु-

---

१ तथाचानुभवानुसारित्वात्कल्पनाया न विनिगमनाविरहावकाश इति भावः। २ सत्यं ज्ञानमनन्तं ब्रह्म।

भेदः, अन्यथा बन्धमोक्षव्यवस्थानुपपत्तिः । योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्स्तौति । अभेदभावनयैव च यतितव्यमिति वदति । अत एव 'सर्वे एव आत्मनिः समर्पिता' इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वे नाशायोगात् । भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव । नच द्वित्वमपि नश्यतीति वाच्यम् । तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि

---

भवो न विरुध्यते एकस्मिन्नेव गगने विभिन्नकर्णशष्कुल्यवच्छेदेन विरुद्धशब्दतदभावयोरनुभवादित्याशङ्क्याह–अन्यथेति । ईश्वरस्य जीवात्मकत्व इत्यर्थः । बन्धमोक्षेति । कश्चित् बद्धः (१संसारी) कश्चिन्मुक्तः (निवृत्तसंसारः) इति व्यवस्थानुपपन्ना स्यादित्यर्थः । चैत्रमैत्रात्मनोरीश्वररूपयोरैक्यादितिभावः । ननु कथं तर्हि तत्त्वमसीत्यादि तच्छब्दप्रतिपाद्यब्रह्मणि युष्मच्छब्दप्रतिपाद्यजीवस्याभेदबोधको वेदः प्रमाणमित्यत आह–योऽपीति । मोक्षकाले जीवात्मनां ब्रह्मणा सहाभेद उत्पद्यत इत्यपि मतं निरस्यति—मोक्षदशायामिति । भेदस्यानित्यत्वमभ्युपेत्यापि मोक्षकाले जीवब्रह्मणोर्भेदं व्यवस्थापयति–भेदनाशेऽपीति । भेदसत्त्वे व्यक्तिद्वयं निर्विवादमेवेत्यपिना सूचितम् । तव । वेदान्तिनः । निर्द्धर्मक इति । इदं च सत्यत्वाभावेऽपी-

---

१ बद्धमुक्तात्मनोः । ईश्वरस्वरूपयोरिति चैक्यहेतुत्वेनोक्तम् ।

२ "तत्त्वमसि श्वेतकेतो" इत्यादिवाक्यस्य हि परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणमुख्यार्थप्रतिपादकत्वासम्भवाज्जहदजहल्लक्षणया विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्ट्यांशपरित्यागेनाविरुद्धाखण्डचैतन्यमात्रप्रतिपादकत्वं वेदान्तग्रन्थेषु सोऽयं देवदत्त इत्यादिदृष्टान्तमुखेन प्रतिपादितमस्ति तदनुसारेण शङ्कते ।

सत्यस्वरूपं तदितिवद् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यताम्। प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनासिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादको वेदः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति। सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्। अत एव 'निरञ्जनः परमं साम्यमुपैति' इति श्रूयते। ईश्वरो न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः। 'नित्यं विज्ञानमानन्दं ब्रह्म' इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः 'यः सर्वज्ञः स सर्ववित्' इत्याद्यनुरोधात्। आनन्दमित्यस्याप्यानन्दवदित्यर्थः। अर्शआदित्वान्मत्वर्थीयाच्प्रत्ययात्। अन्यथा पुंल्लिङ्गत्वापत्तिः।

---

त्यत्र हेतुतयोक्तम्। ननु स्वभिन्नधर्म्मशून्यत्वरूपं निर्द्धर्म्मकत्वं नानुपपन्नं मिथ्यात्वाभावरूपसत्यत्वस्य ब्रह्मरूपत्वादभावस्याधिकरणात्मकत्वादित्यभिप्रायेण शङ्कते—मिथ्यात्वाभाव इति। ननु कथमेकत्वाधिकरणे तदभावरूपद्वित्वमत आह—प्रत्येकमिति। ननु "ब्रह्मविद् ब्रह्मैव भवति" इतिश्रुतेर्मोक्षदशायामभेद उत्पद्यत इत्यर्थिकायाः का गतिरत आह—योऽपीति। अतएव। उक्तश्रुतेः साम्यप्रतिपादकत्वादेव। निरञ्जनः। निर्दुःखः। द्वितीये दोषमाह—ईश्वरोऽपीति। ज्ञानाश्रय एवोक्त इति। अधिकरणल्युडन्तेन तेन विज्ञाना-

---

१ नात्मसामान्यस्य ज्ञानरूपत्वं किन्तु परमात्मन एवेति द्वितीयपक्ष इत्यर्थः।

आनन्दोऽपि दुःखाभावे उपचर्य्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन सुखित्वप्रत्ययात्। अस्तु वा तस्मिन्नानन्दो नत्वसावानन्दः 'असुखम्' इति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति चेत्। न। क्लिष्टकल्पनापत्तेः प्रकरणविरोधादानन्द-

---

श्रयत्वबोधनादिति भावः। अन्यथा। अर्श आद्यजभावे। पुल्लिङ्गत्वापत्तिरिति। आनन्दमितिनपुंसकत्वानुपपत्तिरित्यर्थः। स्यादानन्दथुरानन्द इति कोशेन तस्य नित्यपुंल्लिङ्गत्वावधारणादिति भावः। छान्दसत्वन्त्वगतिकगतिरेव। ननु आनन्दवदित्यर्थो न सङ्गच्छते तत्र मते ईश्वरे आनन्दाभावादत आह—आनन्दोऽपीति। उपचर्य्यते। उपचारेण लक्षणया बोध्यते। अत्र सदृष्टान्तं हेतुमाह—भारेत्यादि। ननु लक्षणाकल्पनमेव ते दोष इत्यत आह—अस्तु वेति। असुखमिति। नञ्तत्पुरुषेऽत्र[1] नञा ब्रह्मणि सुखभेदबोधनादिति भावः। बहुव्रीहिमाशङ्कते—नेति। क्लिष्टकल्पनापत्तेरिति। बहुव्रीहावन्यपदार्थलाभार्थं नञस्तत्रलक्षणा[2]पत्तेरित्यर्थः। ननु नञ्तत्पुरुषेऽपि तत्रासुखपदब्रह्मपदयोरेकधर्म्मिबोधकत्वलक्षणं सामानाधिकरण्यमनुभवसिद्धमन्यथा तयोः समानवचनत्वानुपपत्तेरतस्तन्निर्वाहार्थं नञोऽभाववति लक्षणा तवाप्यावश्यकी-

---

१ असुखपदे।

२ नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप इति समासो विद्यमानपदलोपश्च।

३ नञ्तत्पुरुषे तु न लक्षणा नञो नामत्वेऽपि निपाततया तदर्थस्य भेदेनान्वयसम्भवात्। निपातातिरिक्तनामार्थयोरेवाभेदान्वयनियमात्। कथमन्यथा घटो नास्तीत्यादौ नञर्थाभावे प्रतियोगितया घटादेरन्वयाभ्युपगमः।

मित्यत्र मत्वर्थीयाच्प्रत्ययविरोधात् 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्र भेदस्य स्पष्टत्वाच्चेति संक्षेपः॥ एतेन—"प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः,

---

त्यत आह–प्रकरणविरोधादिति। "अस्थूलमनण्वदीर्घ"मित्यादौ सर्वत्र नञ्तत्पुरुषदर्शनेन तत्सन्निधावेकस्यासुखमिति पदस्य बहुव्रीहिनिष्पन्नत्वे नञ्तत्पुरुषनिष्पन्नपदपरम्पराघटितस्वरूपप्रकरणविरोधः स्पष्ट एवेति भावः। मत्वर्थीयाच्प्रत्ययविरोधादिति। आनन्दशब्दस्य पुंल्लिङ्गत्वनियमेनानन्दमितिरूपस्य मत्वर्थीयाच्प्रत्ययं विनाऽनुपपत्तेरितिभावः। लिङ्गव्यत्ययस्य वेदे बाहुलकत्वादभ्युपगमेऽर्थतः श्रुत्यन्तरविरोधम्प्रमाणयति–आनन्दं ब्रह्मणो विद्वानित्यादिना। अत्र भेदे सत्येव षष्ठ्युपपद्यते न त्वभेदइतिसंक्षेपः।

इतिवेदान्तिमतखण्डनम्॥

---

सांख्यमतं दूषयितुमुपन्यस्यति–एतेनेति। पूर्वोक्तयुक्त्याऽऽत्मनो ज्ञानवत्त्वसाधनेन, वक्ष्यमाणयुक्त्या चेत्यर्थः। प्रकृतिरिति।

---

१ बहुलं "छन्दसीति पाणिनिसूत्राच्छन्दसि सर्वकार्याणां यथादर्शनमेव व्यवस्था, यथाचोदाहृतम्पूर्वैः। "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्त्तृयङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन"॥इति॥ उपग्रहः परस्मै पदात्मनेपदे। नरः पुरुषः।

२ अत एव राहोः शिर इत्यत्रौपाधिकभेदमादाय षष्ठ्युपपादिता महाभाष्ये। उपाधिश्च चैतन्यविशिष्टत्वतद्रहितत्वे। ब्रह्मण आनन्दं विद्वान्पुरुषः कुतश्चनापि न बिभेतीति श्रुत्यर्थः।

३ सांख्यमते तु ज्ञानादयो बुद्धिधर्मा इत्यनुपदं मूले स्फुटीभविष्यति।

किंतु चेतनः। कार्यकारणयोरभेदात् कार्यनाशे सति

---

मूलप्रकृतिरित्यर्थः। कर्त्रीति। कर्त्तृत्वश्चात्र कर्तृभूतान्तःकरणकारणत्वम्। अनुकूलकृतिमत्त्वलक्षणकर्त्तृत्वस्य तन्मतेऽन्तःकरणधर्म्मत्वादिति ध्येयम्। पुष्करपलाशवदिति। पद्मपत्रवदित्यर्थः। यथा च पद्मपत्रमम्भसि वर्त्तमानमप्यम्भसा लिप्तं न भवति तथा पुरुषः प्रकृत्याऽसम्भिन्नोऽपि तदीयकर्त्तृत्वाद्याश्रयो न भवतीति भावः। तथा च पुरुषः कर्त्तृत्वाभाववान् कारणत्वाभावादित्यनुमानं तत्र प्रमाणं बोध्यम्। किन्तु चेतन इति। स्वतः प्रकाशत्वरूपमेवात्र मते चेतनत्वं नतु ज्ञानादिमत्त्वं तस्य बुद्धिधर्म्मत्वाभ्युपगमात्। ननु तत्र कारणत्वसत्त्वाद्धेत्वसिद्धिरत आह–कार्यकारणयोरिति। नाशः स्यादिति। तस्य पुरुष-

---

१ प्रकरोतीति प्रकृतिः साम्यावस्थापन्नगुणत्रयात्मिका मायापदव्यवहार्या, मूलश्चासौ प्रकृतिश्चेतिमूलप्रकृतिः विश्वस्य हि कार्यसङ्घातस्य सा मूलमुत्पत्तिकारणम् नत्वस्याः कारणान्तरमनवस्थापातात्। तथाचोक्तमीश्वरकृष्णेन, "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति। अयमर्थः। या हि मूलप्रकृतिः साऽविकृतिः न कस्यापि कार्यम्। महदाद्याः महत्तत्वम् ( बुद्धिः ) अहङ्कारःक्षित्यादि पञ्चभूतानां तन्मात्राश्चेति सप्त प्रकृतयश्च ता विकृतयश्चेति कारणकार्यभूता इत्यर्थः। महत्तत्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेरेवमहंकारतत्वं पञ्चतन्मात्राणां प्रकृतिर्विकृतिश्च महतः। पञ्चतन्मात्राश्च स्थूलपञ्चभूतानां प्रकृतिर्विकृतिश्चाहङ्कारस्येति। षोडशसंख्यापरिमितो गणः षोडशकः एकादशेन्द्रियाणि पञ्चभूतानि चेति समुदितः विकारः एव पुरुषस्तु न प्रकृतिर्न वा विकृतिस्तथाचोक्तं मूले पुरुषस्तु पुष्करपलाशवन्निर्लेप इति। व्यक्तिभविष्यति चैतदुपरिष्टान्मूले।

२ पुष्कराम्भोरुहाणि च पत्रं पलाशं छदनमिति चामरः।

कार्यरूपतया नाशः स्यादित्यकारणत्वं तस्य।
बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्।
बुद्धिश्च प्रकृतेः परिणामः। सैव महत्तत्त्वमन्तःकरण-
मित्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसाराप-

---

स्य कार्यस्य घटादेर्नाशे सति तद्रूपतया नाशः स्यात्तथाचास्य नित्यत्वसिद्धान्तव्याकोप इति हेतोरकारणत्वमिति समुदितार्थः। प्रकाशे तु तन्नाशोऽपि न स्यादिति पाठः। तत्र न स्यादित्यस्य मा भवत्वित्यर्थः। नन्वेतादृशपुरुषसत्त्वे किं मानमत आह—बुद्धिगतेति। क्वचित्प्रसिद्धस्यैव बुद्धावारोपसम्भवादिति भावः। तत्कल्पनम्। तस्य पुरुषस्य कल्पनमनुमानम्। न च बुद्धिश्चेतना परिणामित्वादिति वक्ष्यते। प्रकृतेरिति। मूलप्रकृतेरित्यर्थः। ननु पुरुषस्य कर्त्तृत्वाभावे तत्र धर्म्माधर्म्मयोरुत्पत्त्यभावात्तदधीनसुखदुःखयोस्तत्रानुत्पत्तौ दुःखध्वंसरूपमोक्षः पुरुषस्य न स्यादत आह—तत्सत्त्वासत्त्वाभ्यामिति। बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः। बुद्धिसत्त्वे इन्द्रियप्रणालिकया तत्परिणामेनायं घट इत्यादिज्ञानेन सम्बद्धो घटादिर्विषयः स्वाकारकज्ञानपरिणामिबुध्याऽगृहीतासंसर्गकत्वसम्बन्धेन पुरुषनिष्ठः

---

१ कारणत्वभावः।

२ इन्द्रियद्वारा। इन्द्रियमार्गेण निर्गता या बुद्धिर्घटादिविषयदेशं प्राप्ता, तदाकारेण बुद्धेः परिणामो जायते स एव वृत्तिरूपं घटादिज्ञानमिति रीत्येन्द्रियाणां द्वारता बोध्या।

३ स्वाकारकत्वमेव ज्ञानघटयोः सम्बन्धः।

४ घटादिविषयाकारकं यज्ज्ञानं तत्परिणामित्वन्तत्कारणत्वम्।

५ अग्रहीताभेदकत्वसंसर्गेण, भेदाग्रहस्तु बुद्धिसान्निध्यरूपदोषादेवेति बोध्यम्।

वगौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चै-

---

पुरुषस्वरूपतिरोधानेन[1] पुरुषस्य संसारसंपादकः। बुद्धिनाशे तु तत्परिणामस्यायं घट इत्यादिज्ञानरूपस्याभावाद्विषयावच्छेदकाभावात्[2]कैवल्यावस्थानरूपो[3] मोक्षः। दुःखसम्बन्धतद्ध्वंसरूपौ संसारमोक्षौ तु न पुंसः किन्तु बुद्धेरेवेति[4] भावः॥ ननु पुरुषे साक्षात्सम्बन्ध[5] एव विषयस्यास्तु स एव च तस्मिन् संसारव्यवहारनियामकोऽस्तु किमुक्तबुद्धिघटितपरम्परासम्बन्धेनेत्यत आह—तस्या एवेति। तथाच विषये बुद्धेरेव सम्बन्धः[6] पुरुषसम्बन्धः। बुद्धिपुरुषयोरसंसर्गाग्रहात्[7] न तु पुरुषे स्वातन्त्र्येण विषयसम्बन्धोऽस्ति मानाभावात्[8]। यद्वा बुद्धितो ज्ञानस्य भेदमाह—तस्या एवेति। तस्या बुद्धेः। इन्द्रियप्रणालिकया इन्द्रियद्वारा। परिणतिः परिणामस्तात्त्विकोऽन्यथाभाव एव ज्ञानरूपा। सैव (परिणतिरेव) घटादिना (तस्याः बुद्धेः) सम्बन्धः। तथाच बुद्धेः परिणतिर्ज्ञानं न तु बुद्धिरेवज्ञानमिति भावः। भेदाग्रहादिति। बुद्धिपुरुषयोर्भेदाग्रहादित्यर्थः। इदा-

---

१ स्वरूपतिरोधानं सम्बन्धमात्ररहितस्वभावस्याप्रकाशः।

२ विषयावच्छेदः विषयसम्बन्धभानम्।

३ कैवल्ये नित्यस्यापि विषयसम्बन्धभानं विनाऽवस्थानमवस्थितिः। स एव मोक्षः।

४ बुद्धावेव दुःखस्य तद्ध्वंसस्य चोत्पादादिति भावः।

५ स्वरूपसम्बन्धरूपः।

६ ननु बुद्धेः पुरुषसम्बन्धित्वं तत्र पुरुषसम्बन्धं विना ऽनुपपन्नमित्याशङ्क्याह बुद्धेरेवेति। तथाच भेदाग्रह एव तत्र तत्सम्बन्ध इति भावः।

७ भेदाग्रहातिरेकेण।

८ बुद्धौ तद्भिन्नस्य पुरुषसम्बन्धस्याभ्युपगमे प्रमाणाभावात्।

तन्याभिमानश्च भेदाग्रहात् । ममेदं कर्तव्यमिति म-
दंशः पुरुषोपरागः, बुद्धेः स्वच्छतया चेतनप्रतिबिम्बा-
दतात्त्विकः, दर्पणस्येव मुखोपरागः । इदमिति विष-
योपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विकः,
निःश्वासाभिहतदर्पणस्येव मलिनिमा । कर्तव्यमिति
व्यापारांशः । तेनांशत्रयवती बुद्धिः । तत्परिणामेन
ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धः—दर्पणमलिनिम्नेव

---

नीं बुद्धिं त उपलब्धेर्भेददर्शनार्थं बुद्धेरंशत्रयं प्रदर्शयति—ममेदमि-
त्यादिना । पुरुषोपरागः । पुरुषसम्बन्धः । दर्पणस्य यथा मु-
खसम्बन्धः प्रतिबिम्बमात्रं न तु तात्त्विकस्तथा बुद्धिपुरुषयो-
र्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इत्यर्थः । इन्द्रियप्रणालि-
कया । इन्द्रियद्वारा । परिणतिभेदः । अयं घट इत्यादिज्ञानरूपः
परिणाम एव, विषयेण घटादिना बुद्धेः सम्बन्ध इत्यर्थः ।
तस्य पारमार्थिकत्वे । निःश्वासाभिहतदर्पणस्य मलिनिमा दृष्टा-
न्तः । कर्त्तव्यमिति । पूर्वोक्तपुरुषोपरागविषयोपरागाभ्यां कर्त्त-
व्यस्य घटादेरवभासस्तेन कर्त्तव्यमित्यध्यवसायो व्यापारांश[3]
इत्यर्थः । ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्ध इति ॥ अत्र ज्ञा-
नेन पुरुषस्य योऽतात्त्विकः सम्बन्धः स उपलब्धिरित्युच्यत

---

१ नैयायिका हि बुद्धिरध्यवसाय इत्यनर्थान्तरमित्याहुः ।

२ विशेषणे तृतीया, तदर्थस्य च बुद्धिज्ञानरूपपरिणामार्थका-
ध्यवसायपदार्थेऽन्वयः कर्त्तव्यघटादेरिति षष्ठ्यर्थोऽपि तत्रैवान्वेति ।

३ व्यापारः कर्त्तव्यमित्यभिलप्यमानः अंशः सम्बन्धो यस्य स
तथेत्यर्थः । तथाच ममेदं कर्त्तव्यमिति बुद्ध्यभिलापकशब्दे ममेत्यनेन
पुरुषसम्बन्धः इदमित्यनेन विषयसम्बन्धः कर्त्तव्यमिति व्यापार-
सम्बन्धो बुद्धावभिलप्यत इति सम्बन्धत्रयवती बुद्धिरिति सिद्ध-
मिति भावः ।

सुखस्य–उपलब्धिरुच्यते। ज्ञानादिवत्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा अपि बुद्धेरेव, कृतिसामानाधिकरण्येन प्रतीतेः। नच बुद्धिश्चेतना, परिणामित्वात्”–इति मतमपास्तम्। कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च। चे-

---

इत्यन्वयः। अतात्विके दृष्टान्तः दर्पणस्थमलिम्नेव मुखस्य सम्बन्ध इति। तथाच ज्ञानेन सह चेतनोऽहं करोमीदं जानामीत्याकारको बुद्धावारोपितस्य यः सम्बन्धोऽतात्त्विकः स उपलब्धिर्न्न तु बुद्धिरेवोपलब्धिरिति भावः। कृतिसामानाधिकरण्येनेति। अदृष्टस्यातीन्द्रियत्वेऽपि धार्म्मिकोऽहं करोमीति तदंशे उपनीतभानरूपं बोध्यम्। परिणामित्वादिति। अनित्यत्वादित्यर्थः। कृत्यदृष्टभोगानामिति। कृतिः स्वसमानाधिकरणमेवादृष्टं जनयति तच्चादृष्टं स्वसमानाधिकरणमेव भोगं जनयतीति कृत्यदृष्टभोगानां परम्परया सामानाधिकरण्यप्रमितिवच्चेतनोऽहं करोमीति सामानाधिकरण्यप्रमितिप्रतीतेरित्यर्थः। तद्भिन्ने। कर्त्तृभिन्ने। मानाभावादित्यस्य चेतनइत्यादिः। चः पूर्वोक्तदूषणसमुच्चायकः। कर्त्तृत्वाश्रयो न चेतनः जन्यधर्म्माश्रयत्वात् घटवादित्यनुमितिरूपबाधकप्रमाणसत्त्वाच्चेतनोऽहं करो-

---

१ चेतनोऽहं करोमीत्याकारेण बुद्ध्यारोपितस्य पुरुषस्य ज्ञानेन सहेदं ज्ञानमिति प्रतीयमानोऽतात्त्विकसम्बन्धो यस्स उपलब्धिरित्यर्थो योजनया प्रतीयमान इत्यध्याहारेण च बोधः।

२ ननु कृतिसामानाधिकरण्येन अदृष्टप्रतीतिः प्रात्यक्षिकी न सम्भवति तस्यातीन्द्रियत्वादत आह अदृष्टस्येति।

३ अदृष्टांशे।

४ ननु तद्भिन्ने मानाभावादित्यसङ्गतं कर्त्तृभिन्नानां प्रकृत्यर्थानां सत्त्वादत आदिं पूरयति चेतन इत्यादिरिति।

तनोऽहं करोमीति प्रतीतिश्चैतन्यांशे भ्रम इति चेत्कृ-
त्यंशेऽपि किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षा-
भावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः। नन्वचेतना-
याः प्रकृतेः कार्यत्वाद्बुद्धेरचैतन्यं कार्यकारणयोस्तादा-
त्म्यादिति चेत्। न। असिद्धेः। कर्तुर्जन्यत्वे मानाभा-

मीति प्रतीतिश्चैतन्यांशे भ्रम इत्याशङ्कते–चैतन्यांश इति। कृत्यं-
शेऽपीति। बुद्धिः कर्तृत्वाभावती जन्यत्वादिति बाधकस्य त-
त्रापि सत्त्वादिति भावः। अन्यथा। कर्तृचेतनयोर्भेदाङ्गीकारे।
बुद्धेर्नित्यत्व इति। कर्तृभिन्नस्य चेतनस्य स्वीकारे तस्मिन्सुख-
दुःखाभावात्संसारमोक्षयोरनुपपत्त्या पूर्वोक्तरीत्या बुद्धिसत्वास-
त्त्वाभ्यामेव संसारापवर्गौ वाच्यौ तथाच बुद्धेर्नित्यत्वे तत्स-
त्त्वनिबन्धनस्य सर्वदापत्त्या मोक्षाभाव एव स्यात्। बुद्धेरनित्य-
त्वे तु तत्र जन्यत्वं स्वीकरणीयमजन्यभावस्य नाशासम्भवात्।
तथाच तदुत्पत्तेः पूर्वं तत्सत्त्वनिबन्धनः संसारो न स्यादित्यर्थः।
वस्तुतस्तदुत्पत्तेः पूर्वं तदाश्रितादृष्टादेरभावाद्बुद्धेरनुत्पत्त्या संसारः
कदापि न स्यादित्यवधेयम्। असिद्धेरिति। बुद्धौ प्रकृतिकार्यत्वा-
भावादिति भावः। ननु कर्तृत्वेन जन्यत्वानुमितिः परिशेषात्प्रकृति-
जन्यत्वविषयिणी स्यादत आह कर्तुरिति। कर्तृत्वस्य जन्यत्व-

१ चेतने, शुभाशुभकर्म्माकर्त्तरि सुखदुःखयोरसम्भवादिति भावः।

२ पूर्वमसंसारिणोऽपि संसारित्वोपगमे मुक्तस्यापि पुनःसंसारित्वापत्त्या मोक्षार्थिनोऽपि तत्र वृत्तिर्न स्यादितीष्टापत्तिः कर्त्तुमशक्या। ३ पूर्वमसंसारे कदापि संसारो न स्यादित्यप्यापत्तिः सम्भवतीत्याह वस्तुत इति। ४ बुद्ध्युत्पत्तेः। ५ बुद्ध्याश्रितादृष्टादेः। अत्रादिना तज्जनककर्म्मणः परिग्रहः।

६ कार्यमात्रे अदृष्टस्य कारणत्वादिति भावः।

घात् । वीतरागजन्मादर्शनादनादित्वम् । अना-दिर्नाशासंभवान्नित्यत्वम् । तत्किं प्रकृत्यादिकल्पने-न । नच 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि स-र्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते ।' इ-त्यनेन विरोध इति वाच्यं, प्रकृतेरदृष्टस्य गुणैरदृष्ट-

---

व्याप्यत्वेऽनुकूलतर्काभावादिति भावः । प्रत्युत तद्विपरीताना-दित्वग्राहकमानसत्त्वादनादित्वमेव कर्त्तुरित्याह–वीतरागेति । "वीतरागजन्मादर्शनादि" ति न्यायसूत्रं । वीतो गतः रागो विष-याभिलाषो यस्य स वीतरागस्तस्य जन्म तस्यादर्शनात्स-रागस्यैव जन्मदर्शनादिति तदर्थः । अनादित्वमिति । स्तन्य–( दुग्ध–) पाने बालकस्य प्रवृत्तिरिष्टसाधनताज्ञानम-न्तरेण, तच्च नानुभवस्वरूपं बाधात्, स्मरणस्य स्वसमा-नाधिकरणपूर्वानुभवसापेक्षतया पूर्वजन्मसत्त्वे पूर्वजन्मन्यपि प्रथ-मप्रवृत्त्यनुरोधेन तत्पूर्वस्य एवं तत्पूर्वस्य जन्मनः सिद्धावनादि-त्वमात्मन इति भावः । अनादेरिति । अस्य भावस्येति शेषः । क्वचिदनादिभावस्येत्येव पाठः । प्रागभावस्यानादेरपि नाशदर्शने-न जन्यभावत्वेन नाशे हेतुत्वाभ्युपगमादिति भावः । नचेति । प्रकृतिर्म्माया तस्या गुणैः सत्त्वरजस्तमोलक्षणैः क्रियमाणा-नि कर्म्माणि ( भवन्ति एवमपि ) अहङ्कारोऽहमिति प्रत्ययस्ते-न विमूढ आत्मा अन्तःकरणं यस्य तथाविधः पुरुषः कर्त्ता-हमिति मन्यते, इत्यर्थकेन भगवद्वचनेनेत्यर्थः । तेनात्मनः कर्तृ-

---

१ अस्य–कर्त्तरि बुद्धौ सतीत्यादिस्तथासत्येव तेन विमूढ-त्वोपपत्तिः ।

२ आत्मेत्यस्य पुरुषार्थकत्वे भेदनियतग्रहस्य षष्ठ्यनुपपत्ति-स्तो व्याचष्टे ऽन्तः करणमिति ।

जन्यैरिच्छादिभिः कर्ता अहं अहमेवेत्यस्य तदर्थत्वात्। 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः' इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः। धर्माधर्माश्रय इति। आत्मेत्यनुषज्यते। शा-

त्वाभावप्रतिपादनादिति भावः। अहमेवेति। तेन[1] स्वतन्त्र[2]-कर्तृत्वाभाव एवात्मनि प्रतिपाद्यते न तु कर्तृत्वसामान्याभाव इति भावः। प्रकटीकृतोऽयमिति। "अधिष्ठानं[3] तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवं[4] चैवात्र पञ्चम" मित्यनेन पञ्चानामपि कर्तृत्वं[5] प्रतिपाद्य तत्रैवं सतीत्यादिनापि स्वतन्त्रकर्तृत्वस्यैवात्मनो निषिद्धत्वादिति भावः। एवं पुरुषस्यैव कर्तृत्वमस्तु। न च कारणत्वाभावेन कर्तृत्वाभाव एव साधनीय इति वाच्यम्। स्वरूपासिद्धेः। कार्यकारणयोरभेदात्कार्यनाशे कार्यरूपतया नाशःस्यादित्यकारणत्वं पुरुषस्येत्यपि न सत्। कार्यकारणयोरभेदस्यैवासिद्धत्वात् इति विस्तरभिया नोक्तमित्यभिप्रायवानाह–संक्षेप इति। इत्थमात्मानं निरूपयन्नन्याभिमतं तत्स्वरूपं निराकृत्य पुनःप्रकृततत्स्वरूपमेव निरूपयितुमाह–आत्मेत्यनुषज्यत इति। अनुषज्यते। पूर्वोक्तमिह सम्बध्यते। तथाचायमात्मैव[6] धर्माधर्मा-

---

१ विरोधे हेतुमाह तेनेति।

२ स्वतन्त्रकर्तृत्वं कारणान्तरनिरपेक्षनिष्ठकर्तृत्वम्।

३ आधारः। ४ अदृष्टम्। ५ कारणत्वमुक्त्वा, क्रियानुकूलकृतिमत्स्वरूपस्य तस्याधिष्ठानादौ बाधादिति भावः। एवञ्चाहमेव कर्त्तेत्यत्रापि अहमेव कारणमित्येवार्थस्तथासत्येव मूढत्वोपपत्तिरन्यथा कारणानां बहुत्वेऽपि स्वस्यैव कर्तृतयाऽहमेव कर्त्तेत्यस्य प्रमात्वापत्तिरिति ध्येयम्।

६ सावधारणं सर्वं वाक्यमिति न्यायात्।

रीरस्य तदाश्रयत्वे देहान्तरेण भोगानुपपत्तेः। विशेषगुणयोगत इति। योग्यविशेषगुणस्य ज्ञानसुखादेः संबन्धेनात्मनः प्रत्यक्षत्वं संभवति न त्वन्यथा। अहं जाने अहं करोमीत्यादिप्रतीतेः॥ ४९॥

---

श्रयो न देहादिरित्यर्थः। अत्र हेतुमाह—शरीरस्येति। तदाश्रयत्वे। धर्म्माधर्म्माश्रयत्वे। देहान्तरकृतकर्म्मणां अन्यदेहेषु कृतानि यानि कर्म्माणि तेषाम्। देहान्तरे। अन्यदेहे। भोगानुपपत्तेः। तत्कर्म्मजनितधर्म्माधर्म्मफलसुखदुःखसाक्षात्कारानुपपत्तेरित्यर्थः। मूले विशेषगुणयोगतोऽध्यक्ष इति। आत्मनि प्रत्यक्षं[1] प्रमाणयति। तत्र विशेषपदं योग्यविशेषपरं धर्मादीनामयोग्यानामसंग्रहाय। योग्यत्वञ्चेह मानसप्रत्यक्षविषयत्वमात्रम्। नह्यहं जानेऽहं सुखीत्यादिवदहं धर्म्मी अधर्म्मी वेति कश्चित्तत्त्वतोऽनुव्यवस्यति। विशेषगुणस्य योगत इति षष्ठीतत्पुरुषः। योगत इति आद्यादिभ्यश्चेति तृतीयान्तात्तसिः। योगः सम्बन्धः समवायलक्षण इत्येतत्सकलमभिप्रेत्याह—योग्येत्यादि। योग्यविशेषगुणस्य ज्ञानादेः सम्बन्धेनैवात्माध्यक्षो मानसप्रत्यक्षविषय इत्याह—नत्वन्यथेति। अन्यथा विशेषगुणसम्बन्धं विना। अत्र हेतुमाह—अहं जानेइत्यादि। इत्यादिप्रतीतेरिति। इत्यादिप्रतीतौ ज्ञानसुखादिमत्त्वेनाहंपदवाच्यस्यात्मनोऽध्यक्षस्यानुभवसिद्धत्वादित्यर्थः॥ ४९॥

---

१ यद्यपि प्रमाणेषु प्रत्यक्षं ज्येष्ठमिति पूर्वमेवास्योपन्यासो युक्तस्तथाप्यनुमानानन्तरमेतन्निरूपितामित्येतद्बीजं मूल एवोक्तमधस्तात् (१६०पृ.) दिति सन्तोष्टव्यम्।

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।

अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०॥

प्रवृत्त्येति। अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते। प्रवृत्तिरत्र चेष्टा। ज्ञानेच्छाप्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्माप्यनुमीयत इति भावः। अत्र दृष्टान्त-

---

प्रवृत्त्याद्यनुमेयोऽयमिति मूलेऽयम्पदार्थमाह—आत्मेति।पक्षज्ञानार्थमध्याहृत्य योजयति—परदेहादाविति। प्रवृत्त्याद्यनुमेय इति-तृतीयातत्पुरुषः। अनुमेयोऽनुमातुं शक्यः। परकीयप्रवृत्त्यादे-रतीन्द्रियत्वेन हेतुज्ञानाभावात्स्वरूपासिद्धेश्चाह—प्रवृत्तिरत्र चेष्टेति। चेष्टात्वमुक्तम्प्राक् (शरीरलक्षणे)। ज्ञानेच्छाप्रयत्नादीनामिति ज्ञानक्रमेणाभिधानम्। पूर्वं हि जानाति तत इच्छति ततो यतते। उक्तप्रायत्वादिति। "शरीरस्य न चैतन्य" मित्यनेनोक्तत्वादित्यर्थः। इच्छादीनामभावस्य कण्ठरवेणानुक्तेः [२] प्रायपदम्। चेष्टायाः प्रवृत्तिज्ञापकत्वेऽनुकूलतर्कमाह—चेष्टायाश्चेति। चेष्टयेति। शरीरे समवायेन चेष्टया[३]ऽनुमितस्यावच्छेदकतया प्रयत्नस्य समवायेनाश्रय आत्मैवेति भावः।

---

१ शकिलिङ्गत्र, चात्कृत्याः।

२ यद्यपिचैतन्यं ज्ञानादिकमेवेत्युक्तमधस्तात् (१६०पृ.) तथापीह ज्ञानमात्रं चैतन्यमिति प्रायोवादात्प्रायपदमुपन्यस्तम्।

३ चेष्टा हि क्रिया सा समवायेनात्मनि वर्तते, तयाऽनुमितःप्रयत्नोऽवच्छेदकतासम्बन्धेन शरीरे वर्त्तते,शरीरावच्छिन्ने ह्यात्मनिसमवायेन प्रयत्न उत्पद्यत इति योऽयं समवायेन चेष्टयाऽनुमितः शरीरेऽवच्छेदकतया वर्त्तमानः प्रयत्नस्तस्य समवायेनाश्रय आत्मैव नान्य इत्यक्षरार्थः॥

माह–रथेति। यद्यपि रथकर्म चेष्टा न भवति। तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मापीति भावः। अहंकारस्येति। अहंकारोऽहमितिप्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति। मन इति। मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ५० ॥

त्रिभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१॥

विभुरिति। विभुत्वं परममहत्त्वम्। तच्च पूर्वोक्तमपि स्पष्टार्थमुक्तम्। बुद्ध्यादीति। बुद्धिसुखदुःखेच्छा-

---

दृष्टान्तासिद्धिं निराकरोति–यद्यपीति। तथाचोत्तरसंयोगप्राप्तियोग्यक्रियावत्त्वस्यैव हेतुत्वमिति भावः। तथाचायमनुमितिप्रकारः। शरीरमिदं चेतनाधिष्ठितं प्रवृत्तिमत्त्वात् ( उत्तरसंयोगप्राप्तियोग्यक्रियावत्त्वात)रथवदिति। आत्मनो मनोमात्रजन्यज्ञानविषयत्वे हेतुमाह रूपाद्यभावेनेति ॥ ५० ॥

कालखात्मदिशां सर्वगतत्वं परमं महद्" त्यनेनात्मनि परममहत्वस्योक्तत्वादिह तथा व्याख्याने पौनरुक्त्यमाशङ्क्याह तच्चेति। बुध्यादीत्यत्रादिशब्दार्थमाह–बुद्धिसुखेत्यादि। पूर्वमुक्ता इति। "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा। धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दशे" त्यनेन साधर्म्यप्रकरणे कथिता इत्यर्थः। इति प्र० नु० अभिनवप्रभाख्यायां न्यासि०मु० व्याख्यायामात्मनिरूपणं नाम तृतीयः परिच्छेदः ॥

दिचतुर्दशगुणाः पूर्वोक्ता वेदितव्याः । अत्रैव प्रसङ्गाद् बुद्धेः कतिपयं प्रपञ्चं दर्शयति—बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति—अनुभूतिरिति । अनुभूतिश्च-

---

अत्रैव । आत्मनिरूपणप्रस्ताव एव । प्रसङ्गात् । स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतेः । बुद्धेः, ज्ञानत्वलक्षणलक्षितायाः । कतिपयं न तु सर्वम् । गुणनिरूपणे (१२५का) विशिष्याभिधास्यमानत्वात् । अनुभूतिरितीति । अनुभूतित्वञ्च स्मृतिभिन्नज्ञानत्वम् । स्मृतित्वञ्च चक्षुराद्यजन्यत्वे सति भावनाजन्यज्ञानत्वम् । मतान्तरस्यायुक्तत्वं ध्वनयन्ननुभूतेश्चातुर्विध्यमाह—मूलेऽनुभूतिश्चतुर्वि-

---

१ सङ्गतिश्च षोढा । सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यत इति महदुक्तेः । अन्यासां स्वरूपं भास्करोदयाया(स्तर्कदीपिकाप्रकाशव्याख्याया-) अनुमानपरिच्छेदे द्रष्टव्यम् ।

२ बुद्धिर्हि सर्वव्यवहारहेतुर्ज्ञानत्वमेव च तल्लक्षणम् । ज्ञानत्वञ्च जानामीत्यनुव्यवसायगम्यजातिरूपम् घटं जानामीत्याद्यनुगतानुव्यवसायस्यानुगतधर्ममन्तरानुपपन्नत्वेन तस्य स्वीकर्तव्यतया लाघवाज्जातित्वसिद्धेः ।

३ सोऽयं देवदत्त इत्याकारकप्रत्यभिज्ञायामतिव्याप्तिवारणाय सत्यन्तम् । मानसप्रत्यक्षेऽतिव्याप्तिवारणाय भावनाजन्येति । भावनाध्वंसेऽतिव्याप्तिवारणाय ज्ञानत्वमिति ।

४ तत्रानुभूतिः प्रत्यक्षात्मिकैवेति चार्वाकाः । अनुमितिरपीति काणादसुगतौ । उपमितिरपीति केचिन्नैयायिकैकदेशिनः । शाब्दमपीति नैयायिकादयः । अर्थापत्तिरपीति प्राभाकराः । इयं हि "पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" इति दृष्टे *श्रुते वा पीनत्वान्यथाऽ*नुपपत्त्या रात्रिभोजनस्य कल्पिका

---

* एतेनास्या द्वैविध्यं दर्शितं दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति ।

* पीनत्वस्य रात्रिभोजनं विना अनुपपत्त्या अभावेनेत्यर्थः ।

धेति । अनुमिनोमि उपमिनोमि शाब्दयामीति प्रतीतिसिद्धाना-
मनुमित्यादीनां दुर्वारतया चार्वाकाद्युदितमयुक्तमिति भावः ।
फलभूतप्रमाप्रसङ्गात्तत्करणरूपप्रमाणान्यवश्यवक्तव्यानीत्यन्य-
त्रोक्तान्यधिगमयति-एतासामिति । प्रत्यक्षेत्यादि । (गौ.सू.१अ०१

---

तैरभ्युपेता । अत्रेदमवधेयम् । यद्विना यदनुपपन्नं तत्तदुपपादकमि-
ति रात्रिभोजनमुपपादकं पीनत्वमुपपाद्यम् । उपपादकज्ञानं फलम्
उपपाद्यज्ञानं करणम् । फलकरणयोरर्थापत्तिशब्दो वर्त्तते । फले अ-
र्थस्य ( उपपादकस्य ) आपत्तिः कल्पनेति व्युत्पत्त्या, करणे तु
अर्थस्य आपत्तिः कल्पना यस्मादिति व्युत्पत्त्येति । अनुपलब्धिर-
पीति भाट्टा वेदान्तिनश्च । ते हि अभावे कलससन्निकर्षाभावेन प्र-
त्यक्षासम्भवात्तद्ग्रहार्थं प्रतियोग्यनुपलम्भाभावस्य पृथक्प्रमाणत्वं प-
रिकल्प्य तज्जन्यैवाभावप्रतीतिरित्यभ्युपयन्ति । सम्भवैतिह्यरूपे अ-
पीति पौराणिकाः । ते हि शतमस्तीति ज्ञानानन्तरं शतं पञ्चाशद्घ-
टितमिति ज्ञानात्पञ्चाशदस्तीति सम्भवः "इह वटे यक्षः प्रतिवस-
तीत्यज्ञातमूलवक्तृकवाक्याज्जायमानं शाब्दभिन्नं *ज्ञानं ऐतिह्यं च
अनुभवरूपमेवेति वदन्ति । तदेतदयुक्तं " देवदत्तो रात्रौ भुङ्क्ते दि-
वाऽभुञ्जानत्वे सति योगाद्यजन्यपीनत्वाद्यन्नैवं तन्नैवं यथा मुनिरिति
व्यतिरेक्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् । अनुपलब्धिस्तू-
पलब्ध्यभाव एव न तु पृथगतो विशेषणतासन्निकर्षेणाभावज्ञानं प्र-
त्यक्षात्मकमेव । सम्भवोऽपि "अयं पञ्चाशद्वान् शतवत्त्वादित्यनु-
मानमेव । शतस्य पञ्चाशद्व्याप्यत्वात् । ऐतिह्यमपि शाब्द एव, आ-
प्तोक्तत्वसन्देहादप्रामाण्यज्ञानास्कन्दित इति त्वन्यत् ।

१ फलस्य सकरणत्वनियमात्फलज्ञाने तदुपायभूततत्करणजि-
ज्ञासावश्यमुदेतीति तच्छान्त्यै तदुपन्यास आवश्यक इति भावः ।

---

* आप्तोक्तत्वेन निश्चितशब्दस्यैव तत्करणत्वेन प्रकृते तदभा-
वादिति भावः । इति हेति निपातसमुदाय इत्याहेत्यर्थकस्तस्माद-
नन्तावसथेतिहभेषजाञ्ञ्य ( ५ । ४ । २३ पा० ) इति स्वार्थे ञ्यप्र-
त्ययनिष्पन्नमैतिह्यपदम् ।

तुर्विधेति। एतासां चतसृणां करणानि चत्वारि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे।

घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

प्रत्यक्षमिति। इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्। यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्। ईश्वरप्रत्यक्षं तु न लक्ष्यम्। 'इ-

---

पा.) अत्र प्रत्यक्षं नाम प्रतिगतं प्रतिगमकं वा अक्षमिन्द्रियं विषयसम्बद्धमिन्द्रियमिति यावत्। अनुमानादिस्वरूपमग्रे व्यक्तीभविष्यति ॥ ५१ ॥

उद्दिष्टासु प्रमासु प्रथमोपस्थितत्वात्प्रत्यक्षं लक्षयति—इन्द्रियजन्यमिति। इन्द्रियैरिन्द्रस्यात्मनो लिङ्गैश्चक्षुरादिभिर्जन्यमुत्पन्नमित्यर्थः। तच्चेन्द्रियरूपमपीत्यतो ज्ञानमिति। अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति। एवमप्यतिव्याप्तिस्तत्र तदवस्थेत्याशङ्कते—यद्यपीति। समाधत्ते—तथापीति। तथाचेन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वं प्रत्यक्षलक्षणम्। ज्ञानमिति स्वरूपकीर्त्तनार्थेन। मनसो हि मनस्त्वेनैव ज्ञानकरणता नत्विन्द्रियत्वेनातिप्रसक्तत्वात्तस्येति भावः। नन्वीश्वरीयज्ञानस्य नित्यत्वेनेन्द्रियजन्यत्वाभावात्तदीयप्रत्यक्षेऽव्याप्तिरत आह—ईश्वरप्रत्यक्षन्त्विति। तथाचात्र जन्यप्रत्यक्षमेव लक्ष्यत्वे-

---

१ "इन्द्रियमिन्द्रलिङ्गमिति ५-२-९३ पा० सूत्रेण, इन्द्रशब्दाद् घप्रत्यये इयादेशे च साधुरयम्।

न्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' इति सूत्रे तथैवोक्तत्वात् ।

---

नाभिमतमिति भावः । ननु तस्यैव लक्ष्यत्वे किम्मानमत आह इन्द्रियार्थेति । तथैवोक्तत्वात् । ईश्वरप्रत्यक्षालक्ष्यत्वस्यैवाभिप्रेतत्वात् । तत्र हि प्रत्यक्षप्रमा लक्ष्यते, अव्यभिचारि–(भ्रमभिन्नम् ) इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमित्यन्वयः । तद्विविधम् अव्यपदेश्यं व्यपदेशानर्हन्निर्विकल्पकमिति यावत् । व्यवसायात्मकं विशिष्टज्ञानात्मकं सविकल्पकमिति यावदिति न्यायसूत्रार्थः । ईश्वरप्रत्यक्षस्यापि लक्ष्यत्वमभिप्रेत्य लक्षणान्तरमाह–अथवेति । ज्ञानाकरणकमिति । ज्ञानाजन्यमित्युक्तौ सवि-

---

१ इन्द्रियाणां चक्षुरादीनामर्थेन घटादिना सन्निकर्षात्सम्बन्धा-( त्संयोगादिरूपा– ) दुत्पद्यमाननिर्णयात्मकं यथार्थज्ञानं प्रत्यक्षम । यथेयं पृथिवी अयं गन्ध इत्यादि । अयं स्थाणुर्नवेत्यादिसंशयमरीचिकादिधर्मिकजलज्ञानादिवारणाय निश्चयेत्यादि । नव्यास्तु प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकञ्चेति तत्र सम्बन्धानवगाहिज्ञानं निर्विकल्पकं यथा घटघटत्वे इति विशकलितम् । सविकल्पकञ्च सम्बन्धावगाहि यथाऽयं घट इत्याकारकमिति विभजन्ति। स्फुटीभविष्यति चैतदुपरिष्टान्मूल एव । उपयोगाच्चात्र दर्शितम् ।

२ व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि तत्कर्म व्यपदेश्यं विशेष्यमिति यावत् । अविद्यमानं व्यपदेश्यं यस्मिँस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि न तु जात्यादीनां मिथोविशेषणविशेष्यभावावगाहीति यावत् ।

३ व्यवसायो *विनिश्चयो विकल्प इत्यनर्थान्तरम । स एवात्मा स्वरूपं यस्य तत्सविकल्पकम् ।

---

* अव पूर्वकषोन्तकर्मणीति धातोर्ज्ञानार्थकत्वमवसीयते इत्यादौ क्लृप्तन्तत एवघञि आतोयुगिति युकि अवसायशब्दो ज्ञानार्थकः । व्युपसृष्टस्य च तस्य विशिष्टज्ञानार्थकत्वं स्पष्टमेवेति ध्येयम ।

अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य करणत्वात्तत्र तत्र नातिव्याप्तिः । इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् । परा-

---

कल्पकेऽव्याप्तिः स्याज्जन्य[1]विशिष्टज्ञानमात्रस्य विशेषण[2]ज्ञानजन्यत्वात् । असम्भवस्तु न निर्विकल्पकस्य ज्ञानाजन्यतया लक्षणसमन्वयसम्भवात् । ज्ञानाकरणकमित्युक्तेरनुमित्यादावतिव्याप्तिवारणं स्पष्टयति अनुमितौ व्याप्तिज्ञानस्येत्यादिना । षष्ठ्यन्तचतुष्टयस्य करणत्वादित्यनेनान्वयः । हेतुत्वादिति पाठो लक्षणाक्षराननुगुणः । अकरणकत्वादेव चेश्वरज्ञानसङ्ग्रह इत्याह—इदमिति । तत्रानुमित्यादौ । अनुमितिं लक्षयति—परामर्शेति । परामर्शत्वञ्च व्याप्तिविशिष्टपक्षधर्म्मताज्ञानत्वम् । तथाच व्याप्तिविशि[3]ष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिरिति फलितम् । भ[4]वति

---

१ जन्येत्युक्त्येश्वरविशिष्टज्ञानस्य विशेषणज्ञानाजन्यत्वेऽपि न कृत्स्नार्थकमात्रपदासङ्गतिः ।

२ विशिष्टबुद्धौ विशेषणज्ञानं कारणं "नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामती" ति नियमात् ।

३ व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षविशेष्यकं पक्षधर्म्मताज्ञानं हेतुतावच्छेदकसंसर्गावगाहिज्ञानमित्यर्थः । परामर्शजन्यसंस्कारेऽतिव्याप्तिवारणाय ज्ञानपदोपादानम् ।

४ ननु व्याप्तिविशिष्टे *पक्षधर्म्मताया ज्ञानमिति व्युत्पत्त्या वह्निव्याप्यधूमवानिति परामर्शजन्यानुमितावव्याप्तिरित्याशङ्कायामाह भवति हीति । वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्म्मताज्ञानं भवतीत्यन्वयः । उक्तरीत्या व्याप्तिप्रकारकपक्षविशेष्यकहेतुतावच्छेदकसम्बन्धावगाहिज्ञानस्यैव तादृशज्ञानलभ्यत्वादिति भावः ।

---

* विशेष्यित्वं सप्तम्यर्थः । षष्ठ्यर्थश्च प्रकारित्वम् ।

मर्शजन्यं ज्ञानमनुमितिः। यद्यपि परामर्शप्रत्यक्षादि-कं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। नच कादाचित्कहेतुविषय-कानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनु-भवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अथवा

---

हि वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्म्मता-ज्ञानं तज्जन्यं पर्वतो वह्निमानिति ज्ञानमिति तत्र लक्षणसमन्वयः। ननु वह्निव्याप्यधूमवत्पर्वतमहं जानामीति परामर्शप्रत्यक्षे विष-यविधया परामर्शस्यापि हेतुत्वात्तत्रातिव्याप्तिरित्याशङ्कते—यद्य-पीति। परामर्शप्रत्यक्षादिकमित्यादिना विशेषणतावच्छेदकप्र-कारकनिश्चयविधया परामर्शजन्यस्य विशिष्टवैशिष्ट्यबोधस्य प-रिग्रहः। समाधत्ते—तथापीति। हेत्वविषयकमिति। तथाचोक्त-ज्ञानस्य धूमरूपहेतुविषयकत्वान्नातिव्याप्तिः। अथैवमपि धूमवान्प-र्वतो वह्निमानालोकादित्यनुमितौ पक्षतावच्छेदकविधया हेतो-र्धूमस्य भानादव्याप्तिमाशङ्क्य निराकरोति—नचेत्यादिना। तादृ-शेति। परामर्शजन्यहेत्वविषयकेत्यर्थः। तथाच पर्वतो वह्निमा-नित्यनुमितिस्तद्वृत्त्यनुभवत्वव्याप्यानुमितित्वजातिमादाय तत्रापि

---

१ ननु प्रत्यक्षे विषयस्य सामान्यतो विषयत्वेन विशेषतश्च त-त्तद्व्यक्तित्वेनैव हेतुतया लक्षणे च व्याप्तिप्रकारकपक्षविशेष्यकहेतुता-वच्छेदकसम्बन्धावगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यता-वत्त्वस्यैव विवक्षणीयतया नोक्तातिव्याप्तिरित्यत आह आदिनेति। तथाचैतदस्वरसेनैवादिपदमुपात्तमिति बोध्यम्।

२ विशिष्टवैशिष्ट्यावगाहि बुद्धित्वावच्छिन्नं प्रति च विशेषणता वच्छेदकप्रकारकनिश्चयत्वेनैव हेतुतया भवति तत्रातिव्याप्ति-रिति भावः।

३ तथाच व्याप्तिप्रकारकपक्षविशेष्यकहेतुतावच्छेदकसम्बन्धा-

व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्ति–जातिमत्त्वमनुमितित्वम् । एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति । ज-

---

लक्षणसमन्वयः पर्वतो वह्निमानित्यनुमितिवृत्तिसत्ताजातिमत्त्वस्य प्रत्यक्षादावपि सत्त्वात्तत्रातिव्याप्तिरतोऽनुभवत्वव्याप्येति । ननु स्वाभाववदवृत्तित्वरूपस्वव्याप्यत्वस्य स्वस्मिन्नपि सत्त्वादनुभवत्वमादायैवातिव्याप्तितादवस्थ्यमिति चेन्न व्याप्यत्वस्यात्र न्यूनवृत्तित्व–( स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व–) रूपस्य विवक्षणेनादोषात् । जातिमत्त्वञ्च समवायसम्बन्धेन विवक्षितन्तेन कालिकसम्बन्धेन जातिमति काले नातिव्याप्तिः । पक्षधर्म्मताया अप्रवेशेन लाघवाल्लक्षणान्तरमाहाथवेति । अत्रापि साध्यतावच्छेदकधर्म्मसाध्यतावच्छेदकसम्बन्धहेतुतावच्छेदकधर्म्महेतुतावच्छेदकसम्बन्धानामननुगमादेकव्याप्त्युपादानेऽन्यानुमितावव्याप्तिरेवेत्येकां यां काञ्चिद्व्यक्तिमुपादाय तज्ज्ञानकरणकवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं विवक्षणीयमत्र, तथाच लाघवाद्यां काञ्चिदनुमितिव्यक्तिमादायैवानुगतरूपेणानुमितित्वादिकं वाच्यमित्याह–वस्तुत इति। घटेऽतिव्याप्तिवारणाय वृत्त्यन्तम् । वृत्तित्वं समवायेन विवक्षितम् । तेनानुमितौ कालिकेन घटत्वस्य वृत्तित्वेऽपि नातिव्याप्तिः । ज्ञान-

---

वगाहिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद्धेतुविषयकज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमनुमितित्वम् ।

१ स्वस्य स्वव्याप्यत्वाभावेनोक्तव्याप्त्यभावादित्यर्थः ।

न्यप्रत्यक्षं विभजते--घ्राणजादीति । घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम्। न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात् ॥ ५२ ॥

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥५३॥

घ्राणस्येति। गोचर इति ग्राह्य इत्यर्थः । गन्धत्वादिरिति । आदिपदात् सुरभित्वासुरभित्वपरि-

---

त्वानुभवत्वादिकमादाय प्रत्यक्षादावतिव्याप्तिवारणाय विशेष्यदलम् । प्रत्यक्षत्वादिकमिति । यत्किञ्चिदुपमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वमुपमितित्वम् । यत्किञ्चिच्छाब्दबोधव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्त्वं शाब्दबोधत्वं निर्वाच्यमित्यर्थः । उक्तसूत्रेति । इन्द्रियार्थसन्निकर्षेत्याद्युपदर्शितन्यायसूत्रेत्यर्थः ॥ ५२ ॥

गोचरपदस्य विषयार्थत्वप्रसिद्धेर्घ्राणस्य च निर्विषयपदार्थत्वाद्घ्राणस्य गोचरो गन्ध इति मूलोक्तमसङ्गतमित्याशङ्क्यार्थान्तरपरतया व्याचष्टे–ग्राह्य इत्यर्थ इति । स्वसंयुक्तसमवायसम्बन्धेन तज्जन्यग्रहविषय इति तदर्थः । तथाच गोचरपदस्य जन्यज्ञानविषयार्थकतया नासङ्गतिरिति भावः । सुरभित्वादीत्यादिनाऽसुरभित्वस्ववृत्तिजातिगन्धाभावानां च परिग्रहः । येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिस्तदभावश्च गृह्यते इति व्या-

---

१ सूत्राननुसारेण प्रत्यक्षसामान्यस्य लक्षणप्रदर्शनपक्षे तु नित्यप्रत्यक्षस्यैकत्वेन तद्विभागासम्भवाज्जन्यप्रत्यक्षस्यैव विभाग इति भावः ।

ग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा । गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम् । तथा रस इति । रसत्वादिसहित इत्यर्थः । तथा शब्दोऽपि शब्दत्वादिसहितः । गन्धो रसश्च उद्भूतो बोध्यः ॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥

क्रिया[1] जातिर्योग्यवृत्तिः समवायश्च तादृशः ।

---

प्रे॰ । अत्रोपपत्तिमाह—गन्धस्येति । प्रत्यक्षत्वात् स्वसंयुक्तसमवायसम्बन्धेनेत्यादिः । तद्वृत्तीति । समवायेन गन्धवृत्तीत्यर्थः । जातिरपीत्यपिना तदभावः । प्रत्यक्षेति[2] । स्वसंयुक्तसमवायसम्बन्धेनेत्यादिः । अभावप्रत्यक्षन्तु इन्द्रियसम्बद्धविशेषणतयैव सर्वत्रेति वक्ष्यते । घ्राणस्य न सामर्थ्यमिति । तथाच यद्ग्रहणे यस्य सामर्थ्यं तदेव तद्गृह्णातीति युक्तियुक्तमत एव च चक्षुषा स्वसंयुक्तसमवायसत्त्वेऽपि न रूपवद्गन्धादिप्रत्यक्षम् । योग्यसन्निकर्षस्यैव[3] प्रत्यक्षहेतुत्वोपगमाच्चक्षुषस्सं रूपेणैव न गन्धादिनेति सिद्धम् । तथाशब्दार्थमाह—रसत्वादिसहित इत्यर्थ इति । अत्र रसत्वादीत्यादिना तद्व्याप्यमधुरत्वादिरसाद्यभावानां संग्रहः । एवमुत्तरत्रापि बोध्यम् । गन्धोरसश्चोद्भूतो बोध्य इति । एतच्च योग्यतावशाद्व्याख्यातम् । तेन पाषाणादौ न तत्प्रत्यक्षमनुत्कटत्वेनायोग्यत्वात् ॥ ५३ ॥

---

१ मूले क्रियेत्यादिः पूर्व-५४ श्लोकस्थेन नयनस्य गोचर इत्यनेनान्वेति । द्वितीयान्तपाठेतूत्तरेणेति बोध्यम ॥

२ प्रत्यक्षमस्त्यस्या इत्यर्थे अर्श आदिभ्योऽज् इति मत्वर्थीयाच्प्रत्ययोऽत्र बोध्यस्तेन स्त्रीलिङ्गतास्य । ३ योग्यसन्निकर्षः ।

उद्भूतरूपमिति । ग्रीष्मोष्मादावनुद्भूतं रूपमिति न तत्प्रत्यक्षम् । तद्वन्ति । उद्भूतरूपवन्ति । योग्येति । पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तितया बोध्यम् । तादृशः । योग्यव्यक्तिवृत्तिरित्यर्थः ॥

गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥

चक्षुर्योग्यत्वमेव कथं तदाह—गृह्णातीति । आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वम् । द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति ॥ ५४ ॥ ५५ ॥

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।

रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

---

रूपे उद्भूतत्वनिवेशस्य फलमाह—ग्रीष्मोष्मादाविति । आदिना चूर्णप्रविष्टतेजः परिग्रहः । न तत्प्रत्यक्षम् ॥ नोष्मादिगतरूपप्रत्यक्षम् । मूले पृथक्त्वसंख्ये इत्यादि । एतच्च योग्यव्यक्तिवृत्तितया ग्राह्यमित्यनुपदं मु० स्फुटीभविष्यति । न्यूनतां परिहर्तुमाह—पृथक्त्वादिकमपीति । तेन परमाण्वादिगतपृथक्त्वादीनां न चाक्षुषत्वम् । कारणमिति । आलोकसंगस्य कारणत्वमन्धकारे चाक्षुषप्रत्यक्षापत्तिवारणाय । उद्भूतरूपस्य तु पिशाचादीनां प्रत्यक्षवारणायेत्यवधेयम् । तयोः । उद्भूतरूपालोकसंयोगयोः । स्वाश्रयसमवायसम्बन्धेनेति ।

---

१ गट्टीति प्रसिद्धचूर्णे तेजः सत्त्वस्य तत्रजलप्रक्षेपानन्तरं प्रत्यक्षतः प्रतीतेः ।

द्रव्याध्यक्षे—

उद्भूतेति। उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः। सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः। रूपान्यदिति। रूपभिन्नं रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्। तथाच पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ता एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः। अत्रापि। त्वगिन्द्रियजन्येऽपि। रूपं द्रव्यप्रत्यक्षे कारणम्। तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्। नवीना-

---

स्वमुद्भूतरूपालोकसयोगौ तदाश्रयः द्रव्यम् ( घटादिः ) तस्मिन्(तदनुयोगिकः) समवायो रूपादेः । एवमुत्तरत्रापि बोध्यम् ॥ ५४ ॥ ५५ ॥

गोचरपदस्य जन्यज्ञानविषयार्थकतया कस्येत्याकाङ्क्षानुत्थितयेऽन्वयति—उद्भूतस्पर्शवद्द्रव्यंत्वचो गोचर इति। स्पर्शत्वादीत्यादिना शीतत्वादिः स्पर्शाद्यभावश्च । साहित्यश्चैकज्ञानविषयत्वरूपमत्र बोध्यम्। रूपभिन्नस्य रूपत्वादेस्त्वगिन्द्रियेणाग्रहणादाह—रूपत्वादिभिन्नमिति। तथाच रूपान्यदिति। मूलस्थरूपपदं तेषामप्युपलक्षणमिति भावः। रूपत्वादीत्यादिना नीलत्वादिपरिग्रहः ॥ ५६ ॥

द्रव्याध्यक्ष इति पूर्वान्वयी न तूत्तरान्वयीति बोधयितुं "रूपमत्रापि कारणम् द्रव्याध्यक्ष" इत्यन्तप्रतीकधारणम्। अत्रापि द्रव्याध्यक्षेरूपं कारणमित्यन्वयः। तत्र,अत्रापीत्यस्यार्थमाह त्वगिन्द्रियजन्येऽपीति। द्रव्याध्यक्ष इत्यस्य द्रव्यप्रत्यक्ष इति। समुदितार्थमाह—तथाचेति एतेन यथा च वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यत इति प्राचीनमतानुसारिस्वोक्तं समर्थितम्। अन्वयव्यतिरेकादिति।

स्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं प्रमाणाभावात्। किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणमन्वयव्यतिरेकात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्, न किञ्चित्। आत्मावृत्ति--शब्दभिन्न--विशेषगुणवत्त्वं वा प्रयोजकमस्तु। रूपस्य कारणत्वे लाघवमिति चेत्। न। वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्। इष्टा-

---

रूपे सत्येव चाक्षुषं न तदभावे। एवं स्पर्शे सत्येव स्पार्शनं न तु तदभाव इत्येवन्तत्सत्त्वे तत्सत्त्वरूपादन्वयात्तदभावे तदभावरूपाद्व्यतिरेकाच्चेत्यर्थः। प्राचीनः शङ्कते—बहिरिन्द्रियेति। ननु कार्याभावे कारणाभावस्य प्रयोजकतया गगनादौ बहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोरुभयोः प्रयोजकत्वकल्पने गौरवात्तादृशप्रत्यक्षे रूपत्वेन हेतुतां कल्पयित्वा तदवच्छिन्नाभावत्वेन तादृशप्रत्यक्षाभावे प्रयोजकत्वकल्पनमुचितमित्यत आह—आत्मावृत्तीति। आत्मनो बहिरिन्द्रियजन्यप्रत्यक्षवारणायात्मावृत्तीति। आकाशस्य बहिरिन्द्रियजन्यप्रत्यक्षवारणाय शब्दभिन्नेति। कालादेस्तद्वारणाय विशेषेति। प्राचीनः शङ्कते—रूपस्येति। लाघवमिति। तथात्वे हि रूपत्वजातिरूपकारणतावच्छेदकैक्यात्कारणैक्यं भवति। आत्मावृत्तीत्यादेः कारणत्वे तु तादृशगुणवत्त्वस्य गुणरूपतयातेषामात्मावृत्तिशब्दभिन्नविशेषगुणानामनेकेषां कारणत्वकल्पने गौरवमितिभावः। पुनः शङ्कते—इष्टेति। प्रतिबन्द्युत्तरयति—उद्भूत-

---

१ बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे,

२ पराभिमतसमाधिसमाधेयमुत्तरं प्रतिबन्दिः (न्दी)। समानं विरोध्युत्तरं प्रतिबन्दीति रामरुद्रः।

पत्तिरिति चेदुद्भूतस्पर्श एव लाघवात्कारणमस्तु । प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते । तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य सम्भवाद्वायोरपि प्रत्यक्षं सम्भवत्येव । बहिरिन्द्रियप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्व-

---

स्पर्श एवेति । लाघवादिति । अस्य आत्मावृत्तित्वावच्छिन्नाभाववत्त्वेनैव तादृशप्रत्यक्षाभावे प्रयोजकत्वशब्दभिन्नविशेषगुणापेक्षयेत्यादिः । यथाश्रुते रूपापेक्षया स्पर्शस्य लाघवाभावात् । तथाचोद्भूतरूपत्वेन उद्भूतस्पर्शत्वेन वा कारणत्वमित्यत्र विनिगमनाविरहः । वायोरिव प्रभायाः प्रत्यक्षाभावे इष्टापत्तिसम्भवादित्यत्रैव ग्रन्थतात्पर्यमिति बोध्यम् । गुरुभूतस्याप्यात्मावृत्तिविशेषेत्यादिना पूर्वमुक्तस्य कारणत्वमेव व्यवस्थापयन्नुपसंहरति—तस्मादिति । ननु त्रुटेः[1] स्पार्शनानङ्गीकारात्तत्स्पार्शनवारणाय स्पर्शान्य[2]—द्रव्यसमवेत—स्पार्शनं प्रति त्वक्संयुक्त[3]स्पार्शनवद्द्रव्यसमवायत्वेन हेतुत्वस्य वाच्यतया वायोः स्पार्शनाङ्गीकारो नोचितः[4] । अन्यथा वायुगतसंख्यापरिमाणयोस्त्वचा ग्रहणप्रसङ्गादित्यत आह—वायुप्रभयोरिति । प्रभोपादानं दृष्टान्तार्थम् ( यथा प्रभाया एकत्वं गृह्यते त-

---

१ त्र्यणुकस्य ।

२ स्पर्शादन्यो यो द्रव्यसमवेतस्तस्य स्पार्शनं प्रतीत्यर्थः ।

३ त्वक्संयुक्तं यत्स्पार्शनवद्द्रव्यन्तत्र समवायत्वेनेत्यर्थः ।

४ चतुरणुकादिवायोरपि स्पर्शान्यत्वाद्द्रव्यसमवेतत्वाच्च तत्र च कारणीभूतत्वक्संयुक्तस्पार्शनवत्समवायाभावात्त्र्यणुकस्य स्पार्शनाविषयत्वादिति भावः ।

५ अन्यथा वायुगतसंख्यादिप्रत्यक्षापत्तिदोषेणैव वायुप्रभयोरिति ग्रन्थस्यावतारितत्वेन तत्र प्रभागतसंख्याप्रत्यक्षे इष्टापत्तिरयुक्ता स्यादिति बोध्यम् ।

म्। वायुप्रभयोरेकत्वं गृह्यत एव। क्वचिद्द्वित्वादिकमपि। क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः॥८६॥

—त्वचो योगो मनसा ज्ञानकारणम्।

त्वचो योग इति। त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः। किं तत्र प्रमाणं, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति। ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं वा स्मरणरूपं वा। नाद्यः। अनुभवसामग्र्यभावात्। तथाहि—प्रत्यक्षे चक्षुरादिना मनःसंयो-

---

था वायोरपीति)। एकत्वं गृह्यते ऐवेति। तथाच वायुगतसंख्यादिग्रहे इष्टापत्त्या वायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः। क्वचिदिति। सजातीयसंवलनाभावे इत्यर्थः। द्वित्वादिकमपीत्यादिपदात्परिमाणपरिग्रहः। तद्ग्रहश्च भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षस्थले बोध्यः। ननु सजातीयसंवलनदशायां भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षाभावे च कथं न वायुगतद्वित्वपरिमाणयोर्ग्रह इत्यत आह—क्वचित्संख्यापरिमाणेति। दोषादिति। सजातीयसंवलनादिरूपदोषादित्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजन्तु वायोः प्रत्यक्षतासन्देहेन मूर्त्तप्रत्यक्षाभावे रूपस्पर्शयोरभावद्वयस्य प्रयोजकताकल्पनमपेक्ष्यैकस्य रूपाभावस्य तथात्वे लाघवान्मूर्त्तस्पर्शत्वावच्छिन्नं प्रति रूपत्वेनैव कारणत्वमुचितमिति। ज्ञानसामान्य इति। जन्यज्ञानसामान्य इत्यर्थस्तेन नित्यज्ञाने तस्याकारणत्वेऽपि न क्षतिः। प्रतिज्ञाते ऽर्थे मानं पृच्छति किन्तत्रेति। उत्तरयति सुषुप्ती-

---

१ परिमाणग्रहश्च।

गस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम्। ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्। ज्ञानाद्यभावेनात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः। इत्यनुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावाच्च न स्मरणमिति चेत्, मैवम्। सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्स-

त्यादि। पुरीतन्नामिका काचिद्धृदिस्था नाडी। ज्ञानाजननमिति। प्रमाणमित्यनुषज्यते। चक्षुरादिनेत्यादिना त्वगादिपरिग्रहः। पुरीतति त्वगिन्द्रियाभावेन तत्र स्थितस्य मनसस्त्वक्संयोगासम्भवादिति भावः। तदभावादेव। चक्षुरादिना मनोयोगाभावादेव। ज्ञानादेरभावादेव न मानसमिति। अत्र ज्ञानादेरिति मानसमित्यत्रापि आकाङ्क्षवशादन्वेति। न प्रत्यक्षमिति। मनोग्राह्ययोग्यविशेषगुणसम्बन्धेनैवात्मनो मानसप्रत्यक्षस्वीकारात्। तत्सामग्र्यन्तर्गतस्य ज्ञानादेरभावादेव नात्मप्रत्यक्षमपीत्यर्थः। उद्बोधकाभावादिति। ननु जातमात्रस्य प्राथमिकेष्टसाधनतास्मरणे जीवनादृष्टस्येव सम्बन्धिज्ञानरूपोद्बोधकासम्भवेऽपि अदृष्टविशेषस्यैवोद्बोधकत्वकल्पनसम्भव इति चेन्न। उद्बोधकस्य फलबलकल्प्यत्वात्। तथाच स्मरणस्य प्रमाणसिद्धत्वे तदनुरोधेन कस्य चिदुद्बोधकत्वं कल्प्यं स्यान्न चात्र स्मरणमनुभवसिद्धमिति भावः। इच्छादिव्यक्तेरिति। ननु पूर्वं जानाति तत इच्छतीत्येवं प्रक्रियायां प्रथमोपस्थितज्ञानमुपेक्ष्येच्छादिव्यक्तेरिति कथनमसङ्गतमिति चेन्न। इच्छाया आदिरि-

१ धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगत इति कारिकायामेवोक्तत्वादिति भावः। २ योग्यविशेषगुणप्रत्यक्षसामग्र्यन्तर्गतस्येत्यर्थः।

म्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् । तदतीन्द्रियत्वे मानाभावात् । सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्रापि प्रमाणाभावात् । अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् । विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात् । परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचि-

ति व्युत्पत्त्या ज्ञानमात्रस्य विवक्षितत्वात् । तदतीन्द्रियत्वे । ज्ञानस्यातीन्द्रियत्वे । ननु सुषुप्तिप्राक्कालीनज्ञानस्य निर्विकल्पकरूपत्वात्तदतीन्द्रियत्वमुभयवादिसिद्धमेवेत्यत आह—सुषुप्तिप्राक्काल इति ॥ विषयत्वक्संयोगस्य । भुज्यमानद्रव्यवाय्वादिना त्वक्संयोगस्य ॥ त्वङ्मनोयोगस्य चेति । तदस्वीकारे चाक्षुषमपि न स्याज्ज्ञानसामान्ये त्वया तस्य हेतुत्वाङ्गीकारादिति भावः । ननु चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वादेव न स्पार्शनन्तत्रे-

१ यद्यपि सुषुप्तिप्राक्काले कदाचिदिच्छादेरपि सम्भवेन तदनुक्त्या मूलस्य न्यूनतापत्त्या मात्रपदमसङ्गतम्, किन्तु तत्पुरुषबहुव्रीहिभ्यां ज्ञानादिविवक्षितमित्येव वक्तुमुचितम् । तथापि स्वप्नावस्थानन्तरमेव सुषुप्तिरिति नियमेन स्वप्नदशायाञ्च मिथ्यामनःसंयोगरूपदोषवशाद्भ्रमात्मकज्ञानमेवोत्पद्यते न त्विच्छादिकमन्यथा स्वप्नदशायां चिकीर्षावलात्प्रवृत्तेरप्यापत्त्या गत्यादेरप्यापत्तेरिति सिद्धान्तमनुसृत्यैवमभिहितम् । वस्तुतो ज्ञानादिव्यक्तेरित्युक्तौ केषाञ्चिज्ज्ञानानां सिद्धान्तेऽप्यतीन्द्रियतया वक्ष्यमाणस्य तस्यातीन्द्रियत्वे इत्यादिदूषणस्यासङ्गत्यापत्त्या मूलकृता ज्ञानमुपेक्षितमेतद्दूषणस्य सविकल्पकज्ञानोपगमेऽपि सुगमतया तदुपेक्ष्य निर्विकल्पकमेव जायत इत्याशङ्क्याग्रे मूले निराकरिष्यते । अत एव स्वप्नावस्थायां प्रलापादेरप्यनुभवसिद्धतया तदानीमिच्छादेः प्रामाणिकत्वमिति युक्तमुत्पश्यामः । २ निर्विकल्पकातीन्द्रियत्वम् ३ त्वङ्मनोयोगास्वीकारे ।

त्पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यत इति। अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते । चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति ।

मनोग्राह्यं सुखं दुःखमिच्छाद्वेषो मतिः कृतिः ॥५७॥

मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । मतिर्ज्ञानम् । कृतिः प्रयत्नः । एवं सुखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः किन्तु

---

त्यत आह– परस्परेति । अनुरोधादिति । अनुभवस्य त्वयाऽपि स्वहस्तितत्वात्[1] । अन्यथेष्टापत्त्यादिना[2] त्वदुक्तापत्तेरसङ्गतत्वापातादिति भावः । मिश्रमतमाह–अन्येत्वित्यादिना । सुषुप्त्यनुरोधेन । सुषुप्तौ ज्ञानानुत्पादानुरोधेन । इत्थञ्च चाक्षुषादिकाले पूर्वोक्तस्पार्शनापत्तिर्न सम्भवतीत्याह–चाक्षुषादीति । त्वङ्मनःसंयोगाभावादिति । चर्ममनः संयोगस्य चाक्षुषादिकाले सत्त्वेऽपि तत्र स्थितेन त्वगिन्द्रियेण मनःसंयोगाभावादिति भावः । मनोग्राह्यत्वस्य सार्वत्रिकत्वादाह–मनोजन्येति । मनसैव ग्राह्यमित्यवधारणपूर्वपदस्तृतीयातत्पुरुषोऽत्र बोध्यस्तेन मनोमात्रजन्यग्रहविषय[3] इति मूलार्थः । नातो लौकिकचाक्षुषादेरपि म-

---

१ स्वीकृतत्वात् ।

२ स्पार्शनं चाक्षुषादिकालेऽपि भवत्येवेतीष्टापत्त्या । आदिना चाक्षुषादिकं कदापि नोत्पद्यत एवेत्यपलापपरिग्रहो बोध्यः ।

३ मनोऽलौकिकसन्निकर्षजन्यत्वविवक्षायां मात्रपदं विनाप्युपपत्तिरिति ध्येयम् ।

मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः॥५७॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।

ज्ञानमिति । चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथाच प्रथमतो घटघटत्वयोर्वैशि-

---

नोजन्यतया मनोग्राह्यत्वस्य घटादावतिव्याप्तिराशङ्कनीया । न्यूनतां परिहरति—एवमिति ॥ ५७ ॥

निर्विकल्पके प्रमाणं दर्शयति—चक्षुःसंयोगादीति । विशेषणज्ञानस्य कारणत्वादिति । ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वे मानाभावः, चक्षुःसंयोगद्वितीयक्षण एव घटे विशिष्टप्रत्यक्षोपगमे क्षतिविरहात्, न हि तृतीयक्षण एव तादृशं प्रत्यक्षमिति लोकानामनुभवः । क्षणस्यातिसूक्ष्मत्वेन क्षणविलम्बस्य शपथनिर्णेयत्वाद् रक्तो दण्ड इति निर्णयं विना रक्तदण्डवानिति निर्णयानुरोधेनान्वयव्यतिरेकाभ्यां भवतु विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणत्वम्, निर्विकल्पकस्य त्वतीन्द्रियत्वेन विशेषणज्ञाने हेतुतायामन्वयव्यतिरेकप्रत्यक्षासम्भवादिति चेत् । शृणु, कदाचिद् घट इत्याकारकं स्वरूपतो घटत्वप्रकारकं, कदाचिज्जातिमानिति जातित्वेन घटत्वादिप्रकारकं ज्ञानं जायते इत्यनुभवसाक्षिकम् । तादृशानुभवनिर्वाहाय घटत्वांशेऽन्याप्रकारकघटत्वप्रकारकबुद्धौ तादृशघटत्वज्ञानत्वेन, घटत्वांशे जातित्वप्रकारकघटत्वविशिष्टबुद्धौ च तादृशघटत्वभानत्वेन हे-

---

१ अन्यथा जातिमानिति घटत्वप्रकारकबोधोत्पादिकायामपि घट इत्याकारकप्रत्यक्षापत्तेरिति भावः ।

ष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि—वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति, घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते, ज्ञाने घटस्तत्र घटत्वम्। यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारः, तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति। घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं

---

तुत्वस्यावश्यकत्वादिति। वैशिष्ट्यानवगाह्येव। वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यमेव। अत्रैवकारेण कल्पनीयविशेषणज्ञानस्य वैशिष्ट्यावगाहित्वे तस्यापि विशिष्टबुद्धितया विशेषणज्ञानान्तरसापेक्षता स्यात्, एवं तस्यापि वैशिष्ट्यावगाहित्वमित्यनवस्थाभिया प्रथमं विशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यमिति सूचितम्। तदेव—तादृशविषयताभयशून्यमेव। निर्विकल्पकम्—निर्विकल्पकस्वरूपम्। लक्षणन्तु प्रकारताशून्यत्वादिकं प्रत्येकमेवेति ध्येयम्। निर्विकल्पके मूलोक्तमतीन्द्रियत्वं साधयति—तथाहीत्यादिना। ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः। इति प्रत्ययादिति—घटाद्यवगाहित्वेनैव ज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः। तत्र—घटमहं जानामीति प्रत्यये। घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवतीति। नच विशेष्ये विशेषणमितिरीत्यैव निर्विक-

---

१ एकत्र लक्षणे इतरविषयतावत्त्वशून्यत्वनिवेशे प्रयोजनाभावादिति भावः।

न संभवति जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात् ।

महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥
विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६१ ॥
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ ६२ ॥

महत्त्वमिति । द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानां

---

रूपकानुव्यवसायोऽस्त्विति वाच्यम् । रक्तः पटो घटो द्रव्यमिति समूहालम्बनानन्तरं रक्तं घटं जानामीति प्रतीत्यापत्त्या विशिष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानभ्युपगमात् । मूले महत्त्वं षड्विध इति । यद्यपि श्रावणादौ महत्त्वस्य हेतुत्वे प्रयोजनाभावस्तथापि द्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छेदकस्य श्रावणादिसाधारण्याच्छ्रावणाद्यन्यत्वनिवेशे गौरवात्प्रयोजनाभावाच्च षड्विध इत्युक्तम् । तथाच षड्विध इत्यस्य षड्विधसाधारणप्रत्यक्षत्वावच्छिन्ने इत्येवार्थो न तु श्रावणत्वाद्यवच्छि-

---

१ विशेष्ये विशेषणमिति न्यायेनानुव्यवसायोपगमे रक्तत्वघटयोः

प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन । द्रव्यसमवेतसम-वेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेत-समवायसंबन्धेन कारणमिति । इन्द्रियमिति । अत्रापि षड्विध इत्यनुषज्यते । इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात् । किंतु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । आत्मादिवारणाय सत्यन्तम् । उद्भूतविशेषगुणस्य (शब्दस्य) श्रोत्रे सत्त्वाच्छब्देतरेति । विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति । उ-

न्न इति भावः । स्वाश्रयसमवायेति । स्वाश्रये समवाय इति सप्तमीतत्पुरुषेण स्वाश्रयानुयोगिकसमवायेति तदर्थः । स्वाश्रयसमवेतत्वेति सुगमम् । स्वं—महत्त्वम् । एवमुत्तरत्रापि समवायपदेन सप्तमीतत्पुरुषेणोक्तार्थोऽवगन्तव्यः । शब्देतरोद्भूतेत्यादि । शब्दादितरे ये उद्भूतविशेषगुणाः सुखादयस्तदनाश्रयत्वे सति ज्ञानकारणं यो मनःसंयोगस्तदाश्रयत्वमिन्द्रियत्वमित्यर्थः । आत्मादिवारणायेति—आत्मादौ योऽतिव्याप्तिरूपो दोषस्तद्वारणायेत्यर्थः । अत्रादिपदेन चर्ममनःसंयोगस्य ज्ञानकारणत्वपक्षे तत्संग्रहः । अत एव लघुभूतस्याप्यात्मान्यत्वे सतीत्यस्य परित्यागः । तथासत्यात्मभिन्ने चर्मण्येवातिप्रसङ्गादिति बोध्यम् । विशेषगुणस्य—शब्दस्य । क्वचित्तथैव पाठः । श्रोत्रे सत्त्वादिति । तथा च तत्राव्याप्तिरिति भावः । एवमुत्तरत्रापि । तत्रेदं बोध्यम् । घ्राणरसनचक्षुषां त्र्यणुकरूपत्वेऽपि तत्कारणीभूताणूनां रूपमनुद्भूतमेवाङ्गीक्रियते । अतस्तेषामप्यनुद्भूतरूपत्वमत एवैषां चा-

---

पूर्वमुपस्थित्या तादृशानुव्यवसायसम्भवाद्विशिष्टवैशिष्ट्यावगाहित्वे तु पूर्वं रक्तो घट इति ज्ञानविरहान्न तादृशानुव्यवसाय इति भावः ।

द्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात्। नच शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकत्वानुपपत्तेः। किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम्। तच्च संयोगादावप्यस्ति। तथाच शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयव-

---

क्षुषं न भवतीति। विशेषपदस्य प्रयोजनं वक्तुं भूमिकामाह—उद्भूतत्वमिति। शुक्लत्वादिना सङ्करादिति। शुक्लत्वाभाववति नीलादावुद्भूतत्वमुद्भूतत्वाभाववति चक्षूरूपादौ च शुक्लत्वं शुक्लपटे चोभयोः समावेश इतिसङ्करः। जनकत्वानुपपत्तेरिति। एकैकस्य कारणतावच्छेदकत्वे व्यभिचारात् कूटस्यैकत्राऽवृत्तितया कारणतानवच्छेदकत्वादिति भावः। नानैवानुद्भूतत्वमिति। अनुद्भूतत्वं नानेति पाठः प्रामाणिकः। तदभावकूटश्चोद्भूतत्वमिति। तथाच तादृशकूटस्य कारणतावच्छेदकत्वमिति नोक्तदोष इतिभावः। विशेषेतीति—संयोगश्च न विशेषगुणः, बुध्यादिषट्कमि (९०।९१) त्यादौ तस्यापरिगणनादिति भावः। कालादिवारणायेति— कालादावतिव्याप्तिवारणायेत्यर्थः। एवमुत्तरत्रापि, विशेष्यदलम्—ज्ञानकारणेत्यादि। इन्द्रियावय-

---

१ प्रयोजनसम्पादिकां युक्तिम्। उद्भूतत्वस्य प्रत्यक्षजनकतावच्छेदकजातिरूपत्वे तादृशजातेः संयोगादिसामान्यगुणे कल्पकाभावेन उद्भूतगुणशून्यत्वोक्तावपि चक्षुरादावव्याप्त्यप्रसक्तेरनुद्भूतत्वाभावकूटस्य तत्त्व एव संयोगादावनुद्भूतत्वजातौ मानाभावेन तदादायाव्याप्तिदानसम्भवाद् भूमिकात्वमवसेयम्।

२ एकत्रावृत्तित्वप्रयुक्तकारणत्वानुपपत्तिरूपदोष इत्यर्थः।

विषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणाय। करणमिति। असाधारणं कारणं करणम्। असाधरणत्वव्यापारवत्त्वम्। विषयेन्द्रियसम्बन्धन्ध

---

ववारणायेति—मनःपदमित्यनेनान्वितम्। नवीनमते मनःपदप्रयोजनमाह—कालादाविति। समवायेन घटाद्यभावादीनां काले सत्त्वेऽपि न तत्प्रत्यक्षं योग्यानुपलब्धेरभावादतो रूपाभावपर्यन्तानुधावनम्। तद्वारणायेति—कालेऽतिव्याप्तिवारणायेत्यर्थः। व्यापारवत्त्वमिति। व्यापारश्चात्र फलोत्पत्त्यव्यवहितप्राक्कालिको ग्राह्यः। तथाचोक्तं हरिणा—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥ इति।

संवदति चामुमर्थं साधकतमं करण (१–४–४२) मि-

---

१ यदि काले घटः स्यात्तदा घटवत्तया उपलभ्येतेत्यापत्तेः कालस्यायोग्यत्वेनासम्भवात्। काले यदि रूपं स्यात्तदोपलभ्येतेत्यापत्तिस्तु सम्भवति नीरूपस्यैव कालस्यायोग्यतायाः सम्पादनीयतया रूपसत्त्वे तदनिर्वाहादिति भावः।

२ यद्यपि ज्ञानकारणत्वोपादानेऽपि कालविधया कालमनःसंयोगस्यापि ज्ञानकारणतया तद्दोषतादवस्थ्यं समवायेन कारणत्वविवक्षणे तु क्वापि कार्ये कालमनःसंयोगस्य समवायेनाकारणत्वाज्ज्ञानपदमनर्थकं तथापि समवायेन कारणतालाभायैव ज्ञानपदम्। अथवा दैशिकपरत्वादिकारणदिङ्मनःसंयोगमादाय दिश्यतिव्याप्तिवारणाय तत्पदमिति भावः।

३ क्रियासिद्धौ प्रकृष्टोपकारणं करणमिति तदर्थः। तत्र फला-

इति। व्यापारः संनिकर्षः। षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति—द्रव्यग्रह इति। द्रव्यप्रत्यक्षमिन्द्रि-

---

तिपाणिनिसूत्रमपि ॥ ५८ ॥

करणलक्षणकुक्षिनिःक्षिप्तं व्यापारं निर्वक्ति मूले—विषयेन्द्रियसम्बन्धइति। नन्वेतदसङ्गतं शब्दश्रोत्रसम्बन्धस्य समवायस्य नित्यतया तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्यात्रासम्भवादिति व्यापारपदमर्थान्तरपरतया विवृणोति—व्यापारः सन्निकर्षइति। वस्तुतस्तु तत्र समवायोऽपि व्यापार एव तल्लक्षणप्रविष्टंतज्जन्यत्वन्तदभिन्नसत्ताकत्वमेव, शब्दप्रतियोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षजनकतया तादृशस्याकाशात्मकश्रोत्रसत्ताधीनसत्ताकत्वान्न व्यापारविरोध इति मन्तव्यम्। मूले संयोगादित्यादौ पञ्चम्यर्थो जन्यत्वम्। तत्र प्रतियोग्याकाङ्क्षायामर्थवशादिन्द्रियसम्बन्ध इति व्याचष्टे—द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यमिति। ननु द्रव्यप्रत्यक्षे इन्द्रियसंयोगस्य न समवायेन कारणतासम्भवस्तस्य विषयनिष्ठस्यात्मन्यसम्भवादिति विषयतैव कार्यतावच्छेदकसम्बन्धो वाच्यः, तथाच द्रव्यविषयकप्रत्यक्षस्य घट इत्याद्याकारकस्य विषयतया घटत्वादावप्युत्पत्त्या व्यभिचार इति चेन्न। द्रव्यप्रत्यक्षमित्यस्य द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमित्यर्थकत्वात्। तथाच प्रत्यक्ष-

---

व्यवहितप्राक्कालिकव्यापारवत्त्वमेव प्रकर्षः।

१ अस्तु वा इन्द्रियस्य करणत्वोपपत्तये शब्दादेर्विषयस्यैव व्यापारत्वं प्रत्यक्षे विषयस्य कारणत्वात्। शब्दादेर्विषयस्याकाशादिजन्यत्वात्सुखादेरप्यात्ममनःसंयोगजन्यत्वेन मनोजन्यत्वानपायादिति विभावनीयम्।

यसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं, द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः । एवमन्यत्रापि विशिष्यैव का-

---

त्वमेवेन्द्रियसंयोगजन्यतावच्छेदकं द्रव्यवृत्तिलौकिकविषयतायाः कार्यतावच्छेदकत्वादेव घटत्वादौ न व्यभिचार इति भावः। एवं संयुक्तसमवायादावप्यूहनीयम् । ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः । एवमन्धकारे घटचक्षुःसंयोगात्स्पार्शनापत्तिश्चेत्यत आह—वस्तुतस्त्विति । नन्वेवमात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य, ज्ञानादिप्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य, प्रत्यासत्तित्वेऽपि चक्षुरादिसंयोग—तत्संयुक्तसमवाययोः प्रमाणाभावः चक्षुरादिसंयुक्तसम-

---

१ तथाहि द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षमिन्द्रियसंयुक्तसमवेतसमवायजन्यम् तदाह मूले एवमग्रेऽपीति ।

२ इन्द्रियसंयोगत्वेन ।

३ यद्यपि चाक्षुषत्वस्येन्द्रियसंयोगजन्यतावच्छेदकत्वेनेन्द्रियसंयोगकारणबलाच्चाक्षुषापत्तिरयुक्ता तद्बलेन प्रत्यक्षत्वावच्छिन्नस्यैव आपादनसम्भवात्तथापि जायमानं प्रत्यक्षं चाक्षुषमेवाङ्गीकार्यं न स्पार्शनं तत्रोद्भूतस्पर्शाभावात्स्पार्शने तस्य हेतुत्वात् इन्द्रियान्तरस्य द्रव्यग्राहकमेव नेत्यभिप्रायेण चाक्षुषापादनान्नासङ्गतिः । एवमुत्तरत्रापि चाक्षुषे आलोकसंयोगस्य हेतुतया तदभावान्नान्धकारे चाक्षुषापत्तिरतः स्पार्शनापादनमिति बोध्यम् ।

र्यकारणभावः । परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वं च चक्षुषा कथं न गृह्यते, तत्र परंपरयोद्भूतरूपसंबन्धस्य महत्त्वसंबन्धस्य च सत्त्वात् । तथाहि–नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते, तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते, उद्भूतरूपसंबन्धस्तूभयमादायैव वर्तते । एवं पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसंबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नच-

---

वेतसमवायेनैव त्र्यणुकादेश्चाक्षुषाद्युपपत्तेरत आह–परन्त्विवति । परम्परया—स्वाश्रयसमवेतसमवेतत्वादिसम्बन्धेन । महत्त्वसम्बन्धो घटनीलमादाय वर्त्तते इति । अत्र हि स्वं महत्त्वं तदाश्रयो घटस्तत्समवेतो नीलस्तत्समवेतत्वं नीलत्वे । एवं स्वमुद्भूतरूपं तदाश्रयो घटः परमाणुर्वा तत्समवेतनीलसमवेतत्वं नीलत्वे । पृथिवीत्वेऽपीति । परमाणुगत इत्यादिः । महत्त्वसम्बन्धो बोध्य इति । सम्बन्धश्च स्वाश्रयसमवेतत्वं तत्र स्वं महत्त्वं तदाश्रयो घटादिस्तत्समेवतत्वं पृथिवीत्वे । उद्भूतरूपसम्बन्धोऽप्येवमेव । तत्र स्वाश्रयो घटः परमाणुर्वा । सत्तायाश्चाक्षुषप्रत्यक्षं स्यादिति । अत्र वायौ सत्तायाश्चाक्षुषे स्वाश्रयसमवेतत्वमेव महत्त्वसम्बन्धः । तदीयस्पर्शादौ च स्वाश्रयमवेतसमवेतत्वम् । उद्भूतरूपस्य तु स्वाश्रयसमवेतत्वमेव परं स घटादिकमादाय बोध्यः, सत्ता चैकैव सर्वत्र । उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्येति । अत्रोद्भूतरूपाव-

---

१ आदिना स्वाश्रयसमवेतत्वं, तच्च पृथिवीत्वानुरोधेन ।

क्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषे तादृशच-क्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचा-क्षुषे कारणत्वं वाच्यम्। इत्थं च परमाणुनीलादौ न

---

च्छिन्नत्वस्य महत्त्वावच्छिन्नत्वस्य च चक्षुःसंयुक्तपदार्थैकदेशे संयोगेऽन्वयः । सामानाधिकरण्यसम्बन्धश्चावच्छेद्यावच्छेदक-भावनियामकः। तथाचोद्भूतरूपसमानाधिकरणः महत्त्वसमा-नाधिकरणश्च यश्चक्षुःसंयोगस्तद्वत्समवायस्य द्रव्यसमवेत-चाक्षुषत्वे कारणत्वमित्येवमस्यार्थो निर्वाच्यः । अत्र परकी-यचक्षुर्घटितचक्षुःसान्निकर्षाच्चक्षुष्ट्वादीनां प्रत्यक्षवारणायोद्भू-तेति। तादृशेति । उद्भूतरूपावच्छिन्न[2]–महत्त्वावच्छिन्नेत्यर्थः। एतत्फलमाह इत्थञ्चेति । अनेन संयुक्तसमवेतसमवायस्य प्र-

---

१ एतच्चार्थवशादुत्तरग्रन्थस्वरसाच्च बोध्यम् । यद्यपि सामा-नाधिकण्यसम्बन्धेन संयोगे रूपावच्छिन्नत्वनिवेशापेक्षया संयु-क्त एव समवायेन रूपावच्छिन्नत्वनिवेशो एव लाघवं तथापि वि-भिन्नावच्छेदेनालोकचक्षुःसंयोगाभ्यान्दण्डादिप्रत्यक्षवारणायाग्रे च-क्षुःसंयोगे आलोकसंयोगनिष्ठावच्छेदकतानिरूपकत्वस्य विव-क्षणीयतया तत्रैव महत्त्वोद्भूतरूपवैशिष्ट्यं निवेशितम् एकत्रैकं वि-शेषणमपरत्र विशेषणद्वयमिति स्वीकारे अर्द्धजरतीन्यायापत्तेरि-ति ज्ञेयम्।

२ एतद्विशेषणप्रयोजनन्तु चक्षुरादिगतशुक्लादिरूपगतशुक्लत्वादे-रप्रत्यक्षत्वम्। तेषां त्रसरेणुरूपाणाम्महत्त्वेऽपि तत्कारणानामणूनाम-नुद्भूतरूपत्वमेवोरीकृतमिति प्रागवोचाम। इत्थञ्च तेषु परकीय-चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वेऽपि उद्भूतरूपावच्छिन्नत्वा-भावान्न चाक्षुषमिति हृदयम्।

नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषम् । तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे

---

त्यासत्तित्वोपगमफलमुक्तम् । नन्वानेनैवं घटादेस्तद्रूपादेश्च प्रत्यक्षत्वोपपत्तौ संयोगस्य संयुक्तसमवायस्य च प्रत्यासत्तित्वोपगमो व्यर्थ एवेति चेन्न महत्त्वावच्छिन्नचक्षुःसंयुक्तसमवेतसमवायस्य त्रसरेणौ तदीयरूपे चाभावाचाक्षुषानुपपत्त्या तयोः प्रत्यासत्तित्वाभ्युपगमात् । इत्थं द्रव्यसमवेतसमेवतचाक्षुषे चक्षुस्संयुक्तसमवेतसमवायस्य महत्त्वावच्छिन्नत्वविशेषणप्रयोजनमभिधाय द्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्तसमवायस्योद्भूतरूपावच्छिन्नत्वविशेषणप्रयोजनमाह—एवं वाय्वादाविति । आदिना परकीयचक्षुः परिग्रहः । सत्तादीत्यादिना चक्षुष्ट्वम् । अत्र महत्त्वावच्छिन्नत्वविशेषणफलन्तु पृथिवीपरमाणौ पृथिवीत्वस्य चाक्षुषाभाव इत्यूह्यम् । स्पार्शनप्रत्यक्षे त्वक्संनिकर्षस्य कारणत्वं प्रपञ्चयति—एवं द्रव्यस्पार्शनप्रत्यक्ष इत्यादिना । पूर्ववदेवेति ।

---

१ चक्षुःसंयुक्तखण्डकपालसमवेतकपालसमेवतत्वस्य घटे । एवं चक्षुःसंयुक्तकपालसमवेतघटसमवेतत्वस्य तदीयरूपादौ च सत्त्वात् ।

२ चक्षुः संयुक्तसमवाये,

घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वत्रप्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः आत्मसमवेतसमवेतमानप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसं·

---

परमाणुघटितत्वक्संनिकर्षेण स्पर्शत्वस्पार्शनवारणाय महत्त्वावच्छिन्नत्वं, प्रभाघटितसन्निकर्षेण स्पर्शत्वस्पार्शनवारणायोद्भूतस्पर्शावच्छिन्नत्वादिविशेषणं बोध्यमित्यर्थः । श्रोत्रावच्छिन्नेति । सकलपुरुषाणां सर्वशब्दप्रत्यक्षापत्तिवारणायेदं विशेषणम् । इन्द्रियसम्बद्धेति । सम्बन्धश्चात्रसंयोगसंयुक्तसमवायादिः । यद्यप्येवं सति[२] इन्द्रियसंयुक्तविशेषणता इन्द्रियसंयुक्त-

---

१ प्रभायां सत्तास्पार्शनवारणं त्वक्संयोगे उद्भूतरूपावच्छिन्नत्वनिवेशान्न सम्भवतीतिस्पर्शानुधावनम् ।

२ यद्यपीयमाशङ्काग्रे मूलकृतैव करिष्यते समाधास्यते चोक्तसमाधानेनैवेति व्याख्याने एतदाशङ्कासमाधानं विफलन्तथापि विशेषणतानां विशेषणतात्वेन विभागे संयुक्तसमवायादीनां चतुर्णां केवलसमवायविभाजकसमवायत्वेनैवानुगमसम्भवेन संयोग–समावाय–विशेषणतास्त्रयःसन्निकर्षा इत्येव कुतोनोक्तमित्याक्षेपस्य मूलकृता

यद्धविशेषणता हेतुः। वैशेषिकमते तु समवायो न प्रत्यक्षः। अत्र यद्यपि विशेषणता नानाविधा तथाहि—भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया, एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया, एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशे-

---

समवेतविशेषणतेत्यादिक्रमेण बाहुल्यमेव प्राप्नोति तथापि विशेषणतात्वेनैव विभागः। नचैवं समवायत्वेन चतुर्णामनुगमप्रसङ्गः परिभाषाया अपर्यनुयोज्यत्वात्[2]। समवायो न प्रत्यक्ष इति। सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्समवायस्यैकतया एकदा भूतभाविसकलाश्रयव्यक्तीनां ज्ञानासम्भवात्समवायो न प्रत्यक्ष इति तदभिमानः। न्यायमते तु सम्बन्धप्रत्यक्षत्वं न कार्यतावच्छेदकं सम्बन्धत्वस्य निर्वक्तुमशक्यत्वात् सांसर्गिकविषयतावत्त्वस्य कथञ्चित्सुवचत्वे-

---

तादृशसमाधानोपर्यनिराकृततया तन्निरासायैव मूलोक्तार्थस्यानुवाद इति विभावनीयम्।

१ षड्विधसन्निकर्ष इति शास्त्रकारीयसङ्केतस्य।

२ संयोगादिभेदेन त्रिविधःसन्निकर्ष इत्येव कुतोनोक्तमित्याक्षेपानर्हत्वात्। तथाविभागेऽपि क्षतिविरहादिति भावः।

षणतया। एवमन्यदप्यूह्यम्। तथापि विशेषणता-त्वरूपेणैकैव सागण्यते। अन्यथा षोढा संनिकर्ष इति प्राचां प्रवादो व्याहन्येतेति। यदि स्यादुपलभ्ये-तेति। अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्।

---

ऽपि तादृशसम्बन्धत्वस्य घटत्वादिसाधारणतया तत्प्रत्यक्षे व्यभिचारापत्तेरपितु संयोगप्रत्यक्षत्वमेव कार्यतावच्छेदकमतः समवायस्य तन्मते न प्रत्यक्षत्वानुपपत्तिरिति भावः। ननुविशे-षणतया तद्वदित्याद्यसङ्गतं विशेषणताप्रत्यासत्तेरभावात्। न च तत्प्रत्यासत्त्यनभ्युपगमेऽभावप्रत्यक्षानुपपत्तिरिति वा-च्यम्। इष्टापत्तेरनुपलम्भस्यैव तत्प्रत्यक्षस्योपगमात्। न च स-मवायप्रत्यक्षानुरोधाद्विशेषणताप्रत्यासत्तिस्त्रीकारः। समवा-[1]यानङ्गीकारात्। अत एवा[2]भावप्रत्यक्षे इन्द्रियं न कारणं कि-न्तु योग्यानुपलब्धिरेवेति भाट्टा[3]नामाक्षेपं दूषयितुं मूले—यदि स्यादिति। अयम्भावः। इन्द्रियैरभावप्रत्यक्षे जननीये यो-ग्यानुपलब्धेः सहकारितामात्रमुपेयते। तद[4]भावादेवाभावग्राह-क-(विशेषणता-) सन्निकर्षसत्त्वेऽपि न पिशाचाभावादिप्रत्य-क्षापत्तिरित्यतिरिक्तानुपलब्ध्याख्यप्रमाणकल्पनमनुचि[5]तमिति।

---

१ अवयवावयव्यादीनां स्वरूपस्यैव तन्मते सम्बन्धत्वाभ्युपग-मात्।

२ विशेषणताप्रत्यासत्तेरभावादेव।

३ मीमांसकमहामहो०मैथिलकुमारिलभट्ट-मतानुयायिनाम्।

४ सहकारिणोयोग्यानुपलम्भस्याभावादेव।

५ यद्यप्यनुपलब्धेः सहकारिकारणत्वकल्पनं विशेषणतासान्निक-र्षकल्पनञ्चापेक्ष्यानुपलब्धौ प्रमाणत्वकल्पनमेवोचितम् तथापि अनु-पलब्धेर्व्यापाराभावेन व्यापारवत्कारणत्वघटितप्रमाणत्वासम्भवा-दित्यादितरङ्गिण्यां द्रष्टव्यम्।

तथाहि—भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते। तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र योग्यताप्यपेक्षिता। सा च प्रतियो

योग्यानुपलब्धेरभावप्रत्यक्षे हेतुत्वोपगमे युक्तिमाह तथाहीति। घटादिज्ञाने इति। ननु घटस्य प्रमारूपभानदशायामभावप्रत्यक्षमेव न सम्भवति घटत्व एव तत्प्रमासम्भवेन तदानीमभावे विशेषणतासन्निकर्षस्यैवाभावादितिचेन्न। ज्ञानपदस्य भ्रमार्थकत्वात्। न च घटादिभ्रमहेतुदोष एव तत्प्रतिबन्धकोऽन्यथा भ्रमोत्पत्तिकाले तदभावप्रत्यक्षापत्तिरिति वाच्यम्। विनश्यदवस्थदोषाद्यत्र भ्रमस्तत्र भ्रमोत्पत्तिकाले प्रतिबन्धकीभूतदोषाभावस्य सत्त्वादभावप्रत्यक्षापत्तेः। अभावोपलम्भे। तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षे। प्रतियोग्युपलम्भाभाव इति। तदिन्द्रियजन्यानाहार्यतत्संसर्गकतत्प्रकारकोपलम्भाभावे इत्यर्थः। इन्द्रियान्तरजन्ये आनुमानिके च तदुपलम्भे सत्यपि तदभावप्रत्यक्षात्तदिन्द्रियजन्येति। अभावप्रत्यक्षहेतुप्रतियोग्यारोपसत्त्वेऽप्यभावप्रत्यक्षादनाहार्येति[1]। तत्र। प्रतियोग्युपलम्भाभावे। अपेक्षितेति। तेन[2] न जलपरमा-

---

१ एवमेकसंसर्गेण प्रतियोगिप्रकारकज्ञानसत्त्वेऽपि अन्यसंसर्गेणाभावप्रत्यक्षोत्पत्त्या उभयत्र संसर्गनिवेश इत्यपि बोध्यम्।

२ ननु मूलेऽभावप्रत्यक्षजनकप्रतियोगितावच्छेदकावच्छिन्नतत्सम्बन्धावच्छिन्नप्रकारतानिरूपिततदधिकरणनिष्ठविशेष्यताशाल्युपलम्भाभावे योग्यतानिवेशिता तत्प्रयोजनन्तु नोक्तमतस्तत्प्रयोजनं प्रदर्शयन्तद्वैयर्थ्यशङ्कामपाकरोति तेनेत्यादि। तथाच तदनिवेशे जलपरमाणुविशेष्यकसमवायानवच्छिन्नपृथिवीत्वत्वावच्छिन्नप्रकारकोपलम्भाभावरूपकारणबलात्तत्र पृथिवीत्वाभावप्रत्यक्षापत्तिरिति भावः।

गिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा। तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः। तथाहि—यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते, तत्र घटाभावादिप्रत्यक्षं भवति। अन्धकारे तु नापादयितुं शक्यते, तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्। स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्। गुरुत्वादिकं यद्योग्यं तदभावस्तु न योग्यस्तत्र गुरु-

---

ण्वादौ पृथिवीत्वाभावादेः प्रत्यक्षमिति भावः। मणिकृन्मतानुसारेण योग्यतां निर्वक्ति—सा चेति। प्रतियोगिनः—प्रत्यक्षविषयाभावप्रतियोगिनः। सत्त्वप्रसक्त्येति। सत्त्वस्य विद्यमानतायाः प्रसक्त्यां प्रसञ्जनेनाहार्यारोपेणेत्यर्थः। प्रसञ्जितः—आपादितः। सः—उपलम्भाभावः। न चाक्षुषप्रत्यक्षमिति। अनुपलम्भे विद्यमानेऽपि निरुक्तयोग्यताविशिष्टस्य तस्य तत्राभावादिति भावः। आपादयितुं शक्यत्वादिति। तथा च समानेन्द्रियजन्योपलम्भव्याप्यत्वस्य योग्यताघटकत्वान्न तत्र चाक्षुषमिति भावः। ननु जातित्वादिविशिष्टस्य तेजोवृत्तित्वस्यो-

---

१ अनेन च योग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलम्भप्रतियोगिकत्वरूपयोग्यतानिर्वचनमपि सम्भवतीति सूचितम्। एवमपि स्तम्भादिविशेष्यकपिशाचोपलम्भस्य, जलपरमाण्वादौ पृथिवीत्वोपलम्भस्य च योग्यताप्रकारकत्वयोग्यविशेष्यकत्वाविरहेणैव पिशाचाभावस्य जलपरमाण्वादौ पृथिवीत्वाभावस्य चाप्रत्यक्षत्वोपपादनसम्भवादिति भावः।

२ मूले प्रसञ्जनमिति भावे ल्युट् तदर्थः प्रसक्तिरित्याह।

त्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् । वायावुद्भूतरूपाभावः, पाषाणे सौरभाभावः, गुडे तिक्ताभावः, वह्नावनुष्णत्वाभावः, श्रोत्रे शब्दाभावः, आत्मनि सुखाभावः एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता । अतः स्तम्भादौ पिशाचा-

---

पलम्भव्याप्यत्वात्तेजसि गुरुत्वाभावप्रत्यक्षापत्तिः, एवं स्तम्भे पिशाचत्वाभावस्यापि प्रत्यक्षापत्तिरत आह—गुरुत्वादिकमिति। आदिपदेन पिशाचपरमाण्वाद्यतीन्द्रियवस्तुपरिग्रहः । अयोग्यस्य पिशाचत्वादिजातेरभावस्य प्रत्यक्षत्वाद् गुरुत्वादिकमित्युक्तम् । न योग्यः, न प्रत्यक्षविषयः । वायावुद्भूतरूपाभाव इति । रूपत्वावच्छिन्नाभावस्यातीन्द्रियानुद्भूतरूपप्रतियोगिकत्वेन प्रत्यक्षासम्भवादुद्भूतेति । एवमादय इत्यादिना प्रभाया उद्भूतस्पर्शाभावपरिग्रहः । प्रत्यक्षे विषयत्वेन कारणत्वस्य क्लृप्तत्वात्तेनैव गुरुत्वाद्यतीन्द्रियाभावप्रत्यक्षवारणे तदनुरोधेन तदधिकरणीयत्वेत्यादिद्वितीययोग्यानुपलम्भस्य हेतुता न स्वीकार्येत्यभिप्रायवान्संसर्गाभावे योग्यत्वमाह—संसर्गेति । प्रतियोगिनो योग्यतेति । योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वमित्यर्थः । अत्र द्रव्यसामान्याभाववारणाय मात्रेति । गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम् । रूपगुरुत्वान्यतरावच्छिन्नाभाववारणाय विशेष्यदले मात्रेति । अधिकरणयोग्यतेति । योग्याधिकरणवृत्ति-

---

१ अत्रेदं बोध्यम् । अन्योन्याभावे योग्यता, जात्यवच्छिन्नप्रति-

दिभेदोऽपि चक्षुषा गृह्यत एव ॥५९॥६०॥६१॥६२॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः। अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥६३॥

अलौकिकास्त्विति। व्यापारः संनिकर्षः। सामान्यलक्षण इति। सामान्यं लक्षणं यस्येत्यर्थः। तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्। तथाहि—यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं तत्र ज्ञाने धूमत्वं प्रकारः। धूमत्वेन च संनिकर्षेण धूमा

---

त्वमित्यर्थः। इदञ्चाभावग्राहकयोग्यसन्निकर्षप्रदर्शनार्थम्। तेन स्तम्भ इव वाय्वादौ न पिशाचान्योन्याभावप्रत्यक्षमिति भावः ॥५९॥६०॥६१॥६२॥

अथ धूमत्वादिसामान्यलक्षणाया नित्यत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वकथनमसङ्गतमत आह—व्यापारः सन्निकर्ष इति। ननु सन्निकर्षत्वमिन्द्रियसम्बद्धत्वमेव, तदपि सामान्यस्य धूमत्वादेरिन्द्रियप्रतियोगिकत्वाभावेन दुरुपपादमेवेति चेन्न। संयो-

---

योगिताकत्वजात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वान्यतरदेव। तेन स्तम्भे पिशाचान्योभाव-पिशाचवदन्योन्याभावयोः प्रत्यक्षत्वाप्रत्यक्षत्वोपपत्तिरिति ॥

इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । अत्र यदीन्द्रियसंबद्धप्रकारीभूतमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात्,

---

गस्येन्द्रियप्रतियोगिकत्वेन तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादिसामान्यस्य प्रत्यासत्तितानिर्वाहात् । तच्च । सामान्यञ्च । समन्वयति–तथाहीति । ज्ञानञ्जायत इति । एतत्फलन्तु अग्रे ( ६५ का० ) मूले एव स्फुटम् । अत्र यदीति । इन्द्रियसम्बद्धं सामान्यं प्रत्यासत्तिरित्युच्यते तदेत्यर्थः । ननु यत्र विनश्यदवस्थापन्नचक्षुःसन्निकर्षेण धूम इति ज्ञानं जनितं तत्र चक्षुःसंयोगं विनापि तादृशज्ञानमादायेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारस्य धूमत्वादेर्धूमान्तरे सत्त्वाद् धूमान्तराणां सामान्यलक्षणया ज्ञानापत्तिः । नच तदा धूमो नेन्द्रियसम्बद्धः । ज्ञा-

---

१ यद्यप्येवमपि ज्ञानलक्षण–योगजधर्मयोरिन्द्रियप्रतियोगिकत्वानुपपत्तिस्तदवस्थैव तथापि कालेन स्वाश्रयत्वविशिष्टयोस्तयोः सन्निकर्षत्वाभ्युपगमादाश्रयत्वस्य सप्रतियोगिकत्वमिवेन्द्रियप्रतियोगिकस्य ज्ञानस्य विषयतया विषयवृत्तितया धर्मस्य स्वजन्यज्ञानविषयतावच्छेदकत्वोपलक्षितधर्म्मसम्बन्धेन विषयवृत्तितया च तदनुयोगिकत्वस्याप्युपपत्त्या नानुपपत्तिरित्यादि तरङ्गिण्यां व्यक्तम् ।

२ प्रत्यक्षभूतधूमभिन्नधूमे । प्रत्यक्षधूमव्यक्तेर्द्वितीयक्षणे तज्ज्ञानलक्षणप्रत्यासत्त्याऽलौकिकप्रत्यक्षमिष्टमेवेत्यतः अन्तरपदम् ।

३ पूर्वन्धूमान्तर एव सन्निकर्षस्योपपादिततया तस्यैव ज्ञानापादनं लभ्यत इति नेष्टापत्तिसम्भवः ।

४ इन्द्रियसम्बन्धस्य विशेषणतया सन्निकर्षघटकत्वोपगमान्नोक्तापत्तिरिति भावः ।

तत्र धूमत्वेन सहेन्द्रियसंबन्धाभावात् । मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञान-

---

नलक्षणात्मकसन्निकर्षस्य धूमे सत्त्वात् । न च तत्रैक[1]क्षणे सामान्यलक्षणाजन्यज्ञानस्वीकारे क्षतिविरह[2] इति वाच्यम् । तन्मू[3]लकज्ञानधारापत्ते[4]र्दुर्वारत्वादित्यत आह-लौकिको ग्राह्य इति । अत्र लौकिकसन्निकर्षस्य विशेषणविधया[5] घटकत्वं बोध्यम् । अन्यथा तत्र धूमे पूर्वकालीनचक्षुःसंयोगमादाय तद्दोषतादवस्थ्यमिति ध्येयम्[6] । नन्विन्द्रियसम्बद्धेत्यत्र लौकिकसम्बन्धः

---

१ एतत्पूर्वं चक्षुःसंयोगसत्त्वेन सामान्यलक्षणया ज्ञानोत्पत्ताविघ्नापत्तेः । ज्ञाननाशानन्तरञ्च ज्ञानप्रकारकत्वविरहादेवापत्त्यसम्भवादिति भावः ।

२ क्षणस्यातिसूक्ष्मत्वेन तत्क्षणे तादृशज्ञानानुत्पादस्य प्रमाणेन निश्चेतुमशक्यत्वादिति भावः ।

३ आपाद्यमानज्ञानव्यक्तिमूलकेत्यर्थः ।

४ सामान्यलक्षणया प्रत्यक्षेत्यर्थः । लौकिकसन्निकर्षस्याहेतुत्वेन पूर्वपूर्वज्ञानव्यक्तेरेव सन्निकर्षसम्पादकत्वादिति भावः ।

५ विशेषणत्वेन, विशेषणत्वञ्च स्वविशेष्यान्वयिसन्निकर्षविशेष्यभूतसन्निकर्षवता विशेष्यतासम्बन्धेनान्वयिनि ज्ञाने समानकालीनत्वसम्बन्धेन सन्निकर्षस्य विवक्षणाद्विशेषणत्वमिति भावः ।

६ इदमुपलक्षणम् । यत्र चक्षुःसंयोगे विद्यमानेऽपि दोषवशान्न धूमचाक्षुषं किन्तु धूमत्वप्रकारकं स्मरणं तत्र धूमत्वसामान्यलक्षणाजन्यज्ञानापत्तिवारणाय सामान्यलक्षणाघटकज्ञाने तदिन्द्रियजन्यत्वस्य विशेषणतया वाच्यत्वात् । तथाच तदिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तदिन्द्रियजन्यतदिन्द्रियलौकिकसन्निकर्षवद्विशेष्यकज्ञानप्रकारीभूतं सामान्यं सन्निकर्ष इति हृदयम् ।

म्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसंबन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः ॥ ६३ ॥

परंतु समानानां भावः सामान्यं, तच्च क्वचिन्नित्यं

---

ज्ञानप्रकारेत्यत्र ज्ञानस्य तदिन्द्रियजन्यत्वं चेद्विवक्षितं तदाऽणुत्वेन यत्किञ्चिदणूपस्थितावणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसो बोधो न स्यात् तदणौ मनसो लौकिकसम्बन्धस्य ज्ञाने मनोजन्यत्वस्य चाभावादत आह—इदञ्चेति । तथाच बहिरिन्द्रियेण सामान्यलक्षणया ज्ञाने जननीये तद्विवक्षितं न तु मानससामान्यलक्षणाजन्यज्ञाने इति नोक्तदोष इति भावः ॥ ६३ ॥

अथ आसत्तिराश्रयाणां त्वित्यादिमूलमवतारयितुं भूमिकां[2] रचयति—परंत्वित्यादिना । समानानाम्—एकाकारकप्रतीतिविष-

---

१ यद्यपि ज्ञानसामान्यस्यैव मनोजन्यतयाऽणूपस्थितौ मनोजन्यत्वमस्त्येव तथापि स्मरणस्यापि कालोपाधिविधयेन्द्रियजन्यत्वेन तद्वारणाय तदिन्द्रियनिष्ठजनकतानिरूपिततत्प्रत्यक्षविभाजकोपाध्यवच्छिन्नजन्यताया एव विवक्षणीयतया तादृशमनोजन्यतायाः सुखादिज्ञान एव सत्त्वान्नासङ्गतिः ।

२ अवतरणानुकूला युक्तिरेव तद्भूमिका । ज्ञायमानसामान्यमित्यत्र जातेरेव सामान्यपदार्थत्वेऽनित्यसामान्यस्यैवाप्रसिध्या तत्र दोषदानानुपपत्त्या तद्वारणार्थं सामान्यमुपेक्ष्य तज्ज्ञानस्य प्रत्यासत्तित्वोपगमवैयर्थ्यमित्यनित्यस्य सामान्यत्वव्यवस्थापनमुत्तरग्रन्थावतरणोपयुक्तमिति बोध्यम् ॥

धूमत्वादि, क्वचिच्चानित्यं घटादि। यत्रैको घटः संयोगेन भूतले समवायेन कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव तद्धटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति तत्रेदं बोध्यम्। परंतु सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः।

---

याणां भावः प्रकृतिजन्यबोधे प्रकारः सामान्यमिति गुणवचनब्राह्मणादिभ्यः कर्मणि चेति (५।१।१२४) चाद्भावे ष्यञ्। तच्च। सामान्यम्। क्वचिद्–धूम इत्यादिज्ञाने। क्वचिच्च–घटवदित्यादिज्ञाने च। अनित्यसामान्यलक्षणप्रत्यासत्तेरुदाहरणस्थलमाह–यत्रैक इत्यादि तत्रेदं बोध्यमित्यन्तेन। घटः–घटादिः। भूतले–भूतलादौ। कपाले–कपालादौ। तदनन्तरम्–तादृशज्ञानाद्वितीयक्षणे। तद्धटवताम्–तद्धटादिमताम्। भूतलादीनामित्यादिना संयोगेन तदधिकरणद्रव्यान्तरपरिग्रहः। एवमुत्तरत्रापि। तत्रेदं बोध्यमिति। ज्ञायमानमनित्यं सामान्यं तत्र प्रत्यासत्तिरिति बोध्यमित्यर्थः। परम्परया प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वसम्भवात्किन्त्वित्यादिना वक्ष्यमाणदोषासङ्गतिरत आह–परंत्विति। तथाच घटत्वस्य परम्परया कपालादावज्ञानाद्वक्ष्यमाणदोषसङ्गतिः। तेन सम्बन्धेनेति। अन्यथा समवायेन ज्ञानप्रकारीभूतघटत्वादिसामान्यप्रत्यासत्त्या कपालादिज्ञानापत्ते-

---

१ प्रकृतिरित्युपलक्षणं शब्दमात्रस्य, प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वं हि प्रकृतित्वम्।

२ एतच्चोपलक्षणविधया व्याख्यातं भूतलादीनां कपालादीनामित्युत्तरग्रन्थस्वरसात्। एवमुत्तत्रापि बोध्यम्॥

३ समवायेन तदधिकरणघटपटादिरूपद्रव्यान्तरपरिग्रहः।

किंतु यत्र तद्धटनाशानन्तरं तद्धटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्धटवतां भानं न स्यात् सामान्यस्य तदानीमभावात् । किंचेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याहुरिति भावः। किन्त्विति। एवञ्चेत्यर्थः। तद्घटवतः । कपालादेः । तद्घटवताम् । कपालादीनाम् । सामान्यस्य–घटरूपस्य। तदानीम्–स्मरणकाले । अभावादिति । नच तत्र स्वसमवायिसमवायादिसम्बन्धेन घटत्वादेरेवासत्तितया न भानानुपपत्तिरिति वाच्यम् । समवायादिना घटत्वं कपालादौ यदि न ज्ञातं किन्तु घट एव समवायादिना ज्ञातस्तदुत्तरमपि तद्घटाश्रयकपालानां ज्ञानस्य सर्वानुभवसिद्धस्य घटत्वप्रत्यासत्त्योपपादनासम्भवात् । कुतो न जायतइति । अत्र यद्यपि परदिनेऽयं घट इति ज्ञानं यदि स्मरणादिरूपं तदा तादिन्द्रियजन्यत्वाभावादेव नापत्तिः, यदि चाक्षुषं तदा चक्षुःसंयोगावश्यकतेति नापत्तिसम्भवः, तथापि अलौकिकचाक्षुषमादायापत्तिर्बोध्या[1] । सामान्यविषयकं ज्ञानमिति । इन्द्रियसम्बद्धविशेष्यकं सामान्यप्रकारकं ज्ञानमित्यर्थः । यद्वा[2] सामान्यविषयकं ज्ञान-

१ वस्तुतस्त्विदमापातत एव । सामान्यलक्षणाघटकीभूतालौकिकसन्निकर्षस्य विशेषणत्वविवक्षणेन कालान्तरीयसंयोगमादाय उक्तातिप्रसङ्गस्याभावादिति ध्येयम् ॥

२ नन्वेतत्कल्पे सामान्यज्ञानमात्रस्य प्रत्यासत्तित्वेऽपि न दोषः इन्द्रियसम्बन्धाभावदशायां सामान्यप्रत्यासत्त्या ज्ञानोत्पादस्य मूलकृतैव वारणीयत्वादित्यभिप्रेत्याह यद्वेति ।

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते।

आसत्तिरित्यादि। आसत्तिः प्रत्यासत्तिरित्यर्थः। तथाच सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः। तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते॥

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते॥ ६४॥

---

मात्रमित्यर्थः। सामान्यविषयकज्ञानत्वं प्रत्यासत्तितावच्छेदकमिति यावत्। तथाचात्र कल्पे[1] इन्द्रियसम्बद्धविशेष्यकत्वप्रकारकत्वतदिन्द्रियजन्यत्वानि ज्ञानस्य विशेषणानि नोपादेयानीति ज्ञेयम्। पूर्वमते तु तदिन्द्रियजन्यत्वादेर्निवेशेनेन्द्रियभेदेन कार्यकारणभावभेदकल्पनेन च[2] गौरवमिति भावः। एतन्मते च निर्विकल्पकसाधारणं स्मरणसाधारणं च सामान्यज्ञानमात्रं प्रत्यासत्तिः। तथाच घटत्वप्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकं घटत्वज्ञानत्वञ्च कारणतावच्छेदकं स्वप्रकारीभूतघटत्वाश्रयत्वञ्च कार्यतावच्छेदकः सम्बन्धः। स्वविषयघटत्वाश्रयत्वं कारणतावच्छेदकः सम्बन्धः। चक्षुःसंयोगादिशून्यकाले पूर्वोक्तातिप्र-

---

१ एतत्कल्पे लाघवान्तरमप्यनेन प्रदर्शयति।

२ चकारेण पूर्वोपदर्शितविशेषणत्रयघटकत्वेन कारणतावच्छेदकशरीरगौरवस्य समुच्चयः। यद्यपि सामान्यप्रकारकत्वस्थाने सामान्यविषयकत्वप्रवेशे ज्ञानप्रत्यासत्तित्वपक्षोऽप्यविशिष्ट एव तथापि त्रितयघटितत्वं कारणतावच्छेदकस्येति दर्शयितुमेतदुत्कीर्त्तनमिति ध्येयम्॥

तदिन्द्रियजेति ॥ अस्यार्थः—यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते ॥ ६४ ॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—

विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

विषयीति । सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु

---

सङ्गस्य वक्ष्यमाणतदिन्द्रियजेत्यादिनैव वारणादिति ध्येयम् । न तु सामान्यमिति । ज्ञायमानसामान्यन्तु नैव प्रत्यासत्तिरित्यर्थः । तथा सति चैत्रीयज्ञानविषयसामान्यप्रत्यासत्त्या मैत्रस्य तदाश्रयप्रत्यक्षापत्तिभिया तत्पुरुषीयत्वनिवेशस्यावश्यकतया गौरवम् । ज्ञानस्य प्रत्यासत्तित्वे तु पुरुषनिष्ठप्रत्यासत्त्या हेतुत्वान्न तत्पुरुषीयत्वनिवेश इत्यपि लाघवमिति बोध्यम् । अणुत्वज्ञानमात्रेणैव सकलाणुगोचरमानसबोधोदयादाह—बहिरिति । आलोकसंयोगादिकमित्यादिना दोषाभावपरिग्रहः ॥ ६४ ॥

यदि ज्ञानरूपेति । अत्रत्यो यदि शब्दः सामान्यलक्षणापीत्युत्तरं योज्यः । ज्ञानलक्षणाया ज्ञानरूपतायाः सर्वत्रादिसि-

---

१ ज्ञायमानसामान्यस्य प्रत्यासत्तित्वाभ्युपगमे ॥

यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति। अत्रायमर्थः।
प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति तथाच
सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नि-
त्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्य-
लक्षणा स्वीक्रियते। नच सकलवह्निधूमभानाभावे
का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निसम्बन्धस्य
गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्या-
प्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यल-
क्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरी-
यधूमे वह्निव्याप्यत्वसंदेहः सम्भवति। नच सामा-
न्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते
सार्वज्ञ्यापत्तिरिति वाच्यम्। प्रमेयत्वेन सकलप्रमेयज्ञाने
जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्व-
ज्ञ्याभावात्। एवं ज्ञानलक्षणाया अस्वीकारे सुरभि
चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात्। यद्य-

---

द्धत्वात्। सामान्यलक्षणास्वीकारे बीजमाह अत्रेति। अयमर्थः—अयमभिप्रायः। भानम्—विषयता। न सम्भवतीति। प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्यत्वादिति भावः। वह्निसम्बन्धस्य गृहीतत्वादिति। तथाच प्रत्यक्षधूमे व्याप्तेर्निर्णयान्न तद्विशेष्यको व्याप्यत्वसंशयः सम्भवतीति भावः। ज्ञानलक्षणास्वीकारे बीजमाह—एवमित्यादिना। कथं स्यादिति। चन्दनखण्डस्य चाक्षुषे जायमाने उपस्थितसौरभभानं न स्यात् सौर-

---

१ वक्ष्यमाणस्य व्याख्येयग्रन्थार्थत्वाभावादित्थमव्याख्यत्॥

ऽपि सामान्यलक्षणयापि सौरभज्ञानं सम्भवति तथा-

---

भांशे चक्षुःसंन्निकर्षाभावादित्यर्थः । सौरभत्वप्रकारकलौकिक-प्रत्यक्षसामग्र्याः सहकारिण्या विरहेण सौरभत्वसामान्यलक्ष-णयापि सौरभभानं सम्भवतीति भावः । सुरभि चन्दनमित्या-दौ सौरभादेर्भानं सौरभत्वादिसामान्यलक्षणयैव सम्भवति, सौरभत्वप्रकारकलौकिकप्रत्यक्षसौरभत्वावच्छिन्नप्रकारकप्रत्य-क्षान्यतरसामग्रीसहकारेणैव तस्याः फलजनकत्वाङ्गीकारात् । प्रकृते च द्वितीयसामग्र्याः सहकारिण्याः सत्त्वादित्यभिप्राये-णाह–यद्यपीति । सौरभत्वस्य भानमिति । स्वरूपतः [4]सौरभ-त्वस्य भानमित्यर्थः । ज्ञानलक्षणया–ज्ञानलक्षणयैव । तदानीं सौरभत्वांशे धर्मान्तरस्याग्रहीततया सामान्यलक्षणया तद्भा-नानिर्वाहादिति भावः । ननु धर्मान्तरस्य सौरभांशेऽग्रहेऽपि सौरभत्वसामान्यलक्षणयैव सौरभत्वादेर्भानमस्तु सौरभत्वप्रका-रकसौरभविशेष्यकत्वस्यैव तत्कार्यतावच्छेदकत्वादिति चेन्न । सौरभत्वादिविषयताप्रयोजिकायाः स्वविषयसौरभत्वादिमत्त्वरू-

---

१ योग्यवृत्तित्वविशिष्टसन्निकर्षाभावादित्यर्थः । तेन चन्दने च-क्षुःसंयोगदशायां सौरभेऽपि संयुक्तसमवायस्यावश्यकत्वेऽपि न क्षतिः । अथवा सुरभि चन्दनमिति भ्रमात्मकप्रत्यक्षाभिप्रायेणेद-मुक्तमिति नासङ्गतिः ।

२ सुरभि चन्दनमिति प्रत्यक्षे सौरभत्वप्रकारकज्ञानरूपसामान्य-लक्षणप्रत्यासत्त्यैव सौरभभानं सम्भवतीत्याशङ्कामनेन निराकरोति ।

३ मूलोक्तयद्यपीत्यादिशङ्कोपपत्तये तद्भावम्प्रतिपादयति ।

४ प्रमेयत्वादिसामान्यलक्षणया प्रमेयत्वादिना तद्भानसम्भ-वेऽपि स्वरूपतः सौरभत्वभानं ज्ञानलक्षणानङ्गीकारे न सम्भव-तीति भावः ।

पि सौरभत्वस्य भानं ज्ञानलक्षणया। एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया॥

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः॥ ६५॥

योगजो द्विविध इति। योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जा-

---

पस्य सामान्यलक्षणायाः सम्बन्धस्य सौरभत्वेऽभावेन सामान्यलक्षणया तद्भानानिर्वाहात्। सौरभत्वसामान्यलक्षणायाः कार्यतावच्छेदके सौरभत्वप्रकारकत्वनिवेशे प्रयोजनाभावाच्च। नच ज्ञानलक्षणायाः कारणत्वान्तरकल्पने गौरवभियैव सामान्यप्रकारकत्वस्य कार्यतावच्छेदके निवेश इति वाच्यम्। विशेषणज्ञानहेतुतयैव निर्वाहे ज्ञानलक्षणायाः कारणत्वान्तरकल्पनाविरहादिति ध्येयम्। ननु विशेषणज्ञानजन्यतावच्छेदकं विशिष्टबुद्धित्वं, ज्ञानलक्षणायास्तु विशिष्टप्रत्यक्षत्वमिति न क्लृप्तेन निर्वाहः। एवं[2] यत्र ज्ञानलक्षणया स्वविषय[3]मुख्यविशेष्यकं भानं तत्र विशेषणज्ञानकारणतया न निर्वाह इत्यत आह—एव-

---

१ तत्प्रकारकप्रत्यक्षं प्रति तज्ज्ञानत्वेन कारणत्वमित्यभिप्रायेणेदम्। तथाच कार्यतावच्छेदकधर्मभेदेन कार्यकारणभावयोर्भिन्नत्वादेवापरस्यासिद्धिर्न सम्भवतीति भावः।

२ ननु प्रत्यक्षे ज्ञानप्रत्यासत्तेः कारणता नाङ्गीकरणीया विशेषणज्ञानकारणतायां तु युक्तिः पूर्वमुपदर्शितैवेत्यत आह—एवं यत्रेति।

३ तथाच तद्विषयकलौकिकप्रत्यक्षं प्रति तद्विषयकत्वेन कारणत्वमावश्यकम् अन्यथा घटादिविशेष्यकालौकिकभानेन घटादेर्भानस्यालौकिकत्वापत्तिरिति भावः।

४ इत्यभिप्रायेण ज्ञानलक्षणप्रत्यासत्तेः प्रयोजनमाहेत्यर्थः।

नभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।

युक्तस्य सर्वदा भानमिति । युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥ ६६ $\frac{1}{2}$ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां न्यायसिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ॥

---

मिति । ज्ञानलक्षणयाः स्वविषयधूमाश्रयत्वसम्बन्धेन धूलीपटले ऽभावेन सामान्यलक्षणयाऽनुव्यवसाये धूलीपटलभानासम्भवादिति भावः ॥ ६५ ॥

युक्तस्येति । योगाभ्यासवशीकृतमानसः समाधिसमासादितविविधसिद्धिर्युक्त इत्युच्यते तस्येत्यर्थः । सर्वदैव—ध्यानाद्यभावेऽपि । यथा श्रीकृष्णादेः । द्वितीयस्य–युञ्जानयोगिनः । यथा श्रीरामादेः ॥ ६६ $\frac{1}{2}$ ॥

इति श्रीमत्करमहाकुलकुमुदसुधाकर–श्रीमन्मुकुन्दशर्म्मसङ्कलितायां न्यायमुक्तावलीव्याख्यायां प्रकाशानुगतायामभिनवप्रभाख्यायां बुद्धिभेदनिरूपणन्नाम चतुर्थःपरिच्छेदः (प्रत्यक्षखण्डं ) समाप्तिमगात् ॥ * ॥

रसतर्कनवेन्दुहायने धवलोर्जेगिरिजातिथौ कुजे ।
परिपूर्त्तिमगादियं प्रभाऽभिनवा दृष्टफला सुवैक्रमे ॥ १ ॥

